


# विद्या प्रसारक मंडळ, ठाणे

| | | |
|---|---|---|
| पुस्तकाचे नाव | : | रत्नप्रभाविमर्श : |
| लेखक | : | दुर्गाप्रसाद राव |
| प्रकाशक | : | तिरूपति : तिरूमल तिरूपति देवस्थानम् |
| प्रकाशन वर्ष | : | १९९५ |
| पृष्ठे | : | १२४ पृष्ठे |

**गणपुस्तक**

**विद्या प्रसारक मंडळाच्या**

**“ग्रंथालय” प्रकल्पांतर्गत निर्मिती**

गणपुस्तक निर्मिती वर्ष : २०१४

गणपुस्तक क्रमांक : ७३

R·S

श्रीरामानन्दसरस्वतीप्रणीतब्रह्मसूत्रभाष्य

# रत्नप्रभाविमर्शः

**A STUDY OF RATNAPRABHĀ**

Dr.Chilakamarthi Durga Prasada Rao,
Bhasha Praveena, Vedanta Vidya Praveena,
M.A.(Skt., Tel., & Phil.) Ph.D.
Lecturer in Sanskrit
A. N. R. College
GUDIWADA - 521301 (A. P.)

This book is published with the financial assistance of Tirumala Tirupathi Devasthanam under their scheme

AID TO PUBLISH RELIGIOUS BOOKS

1995

# A STUDY OF RATNA PRABHA


First Edition
June 95
Copies 1000

This book has been published by the author with the financial assistance from Tirumala Tirupati Devastanams under the Scheme AID TO PUBLISH RELIGIOUS WORKS

- AUTHOR-



**D.T.P.Composing :**
Sri Ramanuja Vani
Seshadri Sastri Street
Vijayawada

**Printed at :**
Print Shoppee
Vijayawada

**Cover-design :**
V S Prakash
Vijayawada

**PRICE - 50/-**

Copies Can be had from

CH. Lakshmi Kumari
D.No: 15/230
Satyanarayana Puram
**GUDIWADA - 521 301**
**A.P.**

# प्रार्थना

## जिज्ञासितव्यरूपाय
## विश्वजन्मादिहेतवे
## शास्त्रयोनित्वलिङ्गाय
## प्रान्वितब्रह्मणे नमः

अस्मद्गुरुचरणाः



# Dedication

This humble work is dedicated with utmost devotion and humility to my parents Sri Ch.Venkaṭa Surya nārāyaṇa and Smt. Venkaṭa ramaṇa without whose blessings this work could not have been accomplished.

**AUTHOR**



# आशीर्वचनम्

तर्कवेदान्तसम्राट्
ब्रह्मश्री मद्दुलपल्लि माणिक्यशास्त्री
विजयवाडा
आन्ध्रप्रदेशः

निखिलेषु दर्शनेषु अध्यात्मविद्याप्रधानमद्वैतदर्शनम्। तत्र च शारीरकमीमांसाभाष्यमत्यन्तमभ्यर्हितमादरणीयञ्च। तत्र च रत्नप्रभा सकलभाष्यार्थप्रबोधिनी। सा च व्याख्या सर्वैरपि साम्प्रदायविद्भिः विद्वद्भिः अत्यन्तमादृता पठ्यते च सर्वैरपि जिज्ञासुभिः।। तस्यां महान् विमर्शः सप्रमाणः ससम्प्रदायः रमणीयश्च कृतः चिरञ्जीविना दुर्गाप्रसादरायेण।। स च विमर्शः आमूलचूडं गुणदोषपरिशीलनदृष्ट्र्या समवलोकितः ।। समवलोक्यैनं विमर्शं अत्यन्तं प्रमोदमनुभूतवानस्मि। अतो नवीनैः जिज्ञासुभिः अन्यैश्चेयं रत्नप्रभा व्यख्या अत्यन्तमवलोकनीया ग्राह्या इति मदीयमाशयमाविष्करोमि।। अस्मिन् विषये नातिशयोक्तिलेशोऽपि।।



# BLESSINGS

Prof. P. Srirama Murthy.
Retd Professor of Sanskrit,
Andhra University,
Waltair

Dr. Ch. Durga Prasad has been a sincere and hard working student of Telugu, Sanskrit and vedanta from a very early age and has acquired a good proficiency in all the subjects he studied especially in Sanskrit literature and Vedanta philosophy. After getting his Master's Degree in Sanskrit with distinction he took up Vedanta for a deeper study and carried out a critical analysis of Ramananda's Ratna Prabha, a unique commentary on the Brahmasutras

The study now being published has brought to light several important points. The authorship of the commentary is thoroughly discussed The views of the author on Adhyasa, Agama Pramanya and Anubhava are brought to light. The contribution of the commentary in the growth of Advaita thought has also been highlighted.

Dr. Durga Prasad, Iam sure, will be continuing his studies on vedanta and religious philosophy Having received this publication with approbation we can look forward to his further contribution in the near future.

I wish him all success in his scholarly endeavours.



# रत्नप्रभा विमर्शः – सारांशः

"रत्नप्रभाविमर्शनामकस्यास्य प्रबन्धस्य प्रथमेऽध्याये अद्वैतसिद्धान्तस्य प्राशस्त्यं तस्योत्पत्तिविकासादिकं च प्रदर्शितम् । ततो ब्रह्मसूत्रशांकरभाष्ये चतुस्सूत्रीभागस्य प्रामुख्यं, भाष्यव्याख्यानेषु रत्नप्रभायाः स्थानं च प्रतिपादितम्

" रत्नप्रभाकारः रामानन्दः" इति नामके द्वितीयेऽध्याये रत्नप्रभायाः रामानन्दकर्तृत्वं सोपपत्तिकं, सप्रमाणं च निरूपितम् । ततः रामानन्दस्य गुरुशिष्य परम्परा, तस्य व्यक्तित्वमितरे ग्रन्थाः, रत्नप्रभाव्याख्याकारयोः परिचयश्च कृतः ।

"अध्यास" नामके तृतीयेऽध्यायेऽध्यासस्वरूपप्रदर्शने भगवत्पादानामाशयः अध्यासस्वरुपं, साद्यनाद्यध्यास साधारणलक्षणं, ख्यातिवादप्रसंगे वेदान्त सम्मताऽनिर्वचनीयख्यातेः स्थापनं, सत्तात्रैविध्यनिरूपणं, अध्यासस्यानर्थहेतुत्वमविद्याध्यासयोर्भेदो, अविद्या निवृत्तिश्चेत्यादि विषयाः प्रतिपादिताः।

"जिज्ञासाधिकरणम् " नामके चतुर्थेऽध्याये श्रोतव्यश्रुतौश्रवणविधिनिरूपणं, ब्रह्मजिज्ञासायामधिकारिसाधनं, ब्रह्मजिज्ञासायाः आवश्यकताप्रतिपादनम्, आत्मस्वरूपविषये विप्रतिपत्तावनर्थश्च प्रदर्शितः।

"जन्माद्यधिकरणं" नामके पञ्चमेऽध्याये जिज्ञासाविषयत्वेन प्रतिपादितस्य ब्रह्मणः स्वरूपतटस्थलक्षणे प्रदर्शिते। जगतः स्वरूपं तस्योत्पत्तिविषये विविधशास्त्रकाराणां

मतानि च प्रस्तुतानि। अन्ते ब्रहमणः जगज्जन्मादिकारणत्वं प्रदर्शितम्।

"शास्त्रयोनित्वनामके षष्ठेऽध्याये" शास्त्रस्य योनिः शास्त्रयोनिः तस्माच्छास्त्र योनित्वादित्यन्वय स्वीकारेण ब्रहमणः वेदकर्तृत्वं, शास्त्रं योनिः यस्य शास्त्रयोनिः तस्माच्छास्त्रयोनित्वादित्यन्वयस्वीकारेण वेदैकवेद्यत्वं च प्रत्यपादि। ततः रत्नप्रभामतानुसारं वेदानामपौरुषेयत्वं साधितम्।

समन्वयाख्ये सप्तमेऽध्याये "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति सर्वस्यापि वेदस्य क्रियाबोधकत्वात्, सिद्धवस्तुबोधकवेदान्तानां प्रामाण्यं नास्ति ततः ब्रह्मणः शास्त्रयोनित्वं न घटते इति पूर्वपक्षीकुर्वतां भाट्टमीमांसकानां मतं प्रदर्श्य वेदान्तवाक्यतात्पर्यविषयत्वात् ब्रह्मणः शास्त्रयोनित्वमुपपद्यत इति सोपपत्तिकं निरूपितम्।

ततः ब्रह्मणः शास्त्रप्रमाणकत्वमस्त्येव किन्तु प्रतिपत्तिविधिविषयतयैव, शास्त्रेण ब्रह्म समर्प्यते न स्वातन्त्र्येणेति वदतां वृत्तिकाराणां मतमुपन्यस्य ब्रहमणः कर्मोपासनाद्यंगत्वनिराकरणेन सिद्धवस्तुत्वं निरूपितम्।

अनन्तरं प्रवृत्तिनिवृत्तितच्छेषव्यतिरेकेण केवलवस्तुवादी वेदभागो नास्तीति वदतां प्राभाकरमीमांसकानामाक्षेपं निरस्य सिद्धब्रहमबोधकवेदान्तवाक्यानां प्रदर्शनेन तन्निराकृतम्। तदनन्तरं मुक्तेः स्वरूपं तत्साधनं, जीवन्मुक्तस्य स्वरूपमित्याद्यंशाः प्रदर्शिताः रत्नप्रभाव्याख्यानानुसारेण।

उपसंहारनामकेऽष्टमे रत्नप्रभायां निरूपिताः विशेषांशाः, तदितरव्याख्यानापेक्षया रत्नप्रभाव्याख्यानस्य, वैशिष्ट्यं, तस्य, प्राचुर्यं च संग्रहेण प्रतिपादितम्।

# साङ्केतिकाक्षरविवरणम्

अ. को ✿ अमरकोश
अ. वे -सा को ✿ अद्वैतवेदान्तसाहित्येतिहासकोशः
आप. ध. सू ✿ आपस्तम्बधर्मसूत्रम्
आश्व. श्रौ सू ✿ आश्वलायनश्रौतसूत्रम्
क. उ ✿ कठोपनिषत्
ख्या त. स. ✿ ख्यातितत्वसमीक्षा
गौ . ध. सू ✿ गौतमधर्मसूत्राणि
छा. उ ✿ छान्दोग्योपनिषत्
त. वा ✿ तन्त्रवार्तिकम्
तै. उ ✿ तैत्तिरीयोपनिषत्
जै सू ✿ जैमिनिसूत्राणि
पा यो. सू ✿ पातञ्जलयोगसूत्राणि
पं . द ✿ पंचदशी
ब्र . सू शां . भा ✿ ब्रह्मसूत्रशाकरभाष्यम्
बृ . उ ✿ बृहदारण्यकोपनिषत्
भ . गी ✿ भगवद्गीता
भा . दी ✿ भागदीपिका
मां उ भा ✿ माण्डूक्योपनिषद्भाष्यम्
मा . का . भा ✿ माण्डूक्यकारिकाभाष्यम्
मी न्या प्र ✿ मीमांसान्यायप्रकाश.
मु . उ ✿ मुण्डकोपनिषत्
र प्र ✿ रत्नप्रभा
वि . चू ✿ विवेकचूडामणि·
वे प ✿ वेदान्तपरिभाषा
वे. सा ✿ वेदान्तसार.
शा . सि ले. सं ✿ शास्त्रसिद्धान्तलेशसंग्रह·
श्वे उ ✿ श्वेताश्वतकोपनिषत्
शा. भ. सू ✿ शाण्डिल्यभक्तिसूत्राणि
स. द. सं ✿ सर्वदर्शनसंग्रहः
सां . प्र. भा ✿ साख्यप्रवचनभाष्यम्

✿ ✿

A L * Adyar library
G O M L * Government oriental Manuscripts library
H I P * History of Indian Philosophy
N C C * New Catalogus Catalogorum
P.A I O C * Proceedings of All India Oriental Conference

✿ ✿

# विषयसूचिका

## PREFACE

Vedanta Philosophy, the philosophy based on the concluding part of the Vedas, i e , Upanishads, occupies a prominent place among the orthodox systems of Indian philosophy The edifice of the entire Vedanta system is built mainly upon the trio of works, viz , The Upanishads, The Brahma Sutras and The Bhagavadgita which are also known as Prasthana Traya.

Taking the above works as the basis, Sankara, Ramanuja, Madhva and others established their own theories such as Advaita, Visistadvaita, Dwaita The greateness of Advaita is well-known The essence of Advaita Vedanta can be summerized as

ब्रहम सत्यं जगन्मिथ्या जीवो ब्रहमैव नाऽपरः

" Brahman is the reality

The world is unreal and

Jiva is not other than Brahman Itself"

The commentary of Sankara on Brahma-sutras was itself commentated by many scholars Padmapada wrote a commentary, viz , Panchapadika which was further elaborated by Prakasatmayati in a work entitled "VIVARANA" This work stands as the main source of Vivarana school of thought Vachaspati Misra wrote an excellent commentary, viz , Bhamati which was later commentated by many scholars and which also stands as a main source of Bhamati school of thought Though there are some theoretical differences between these two schools they are one in respect of the uniqueness of Brahman

Among the many Commentaries on Sankara's Bhashya on the Brahma Sutras, Ramananda's Ratnaprabha is unique Ramananda

the author of Ratnaprabha was a versatile Scholar in many disciplines such as Nyaya, Mimamsa Vedanta His Ratnaprabha, being a comprehensive commentary, is studied with appreciation by both students and scholars of Advaita Vedanta Ramananda studied all the commentaries of his time and he himself wrote a treatise meant for those who cannot study all the works inorder to understand the doctrine of Advaita In writing Ratnaprabha the VIVARANA school of thought was followed The author not only appears to be a follower of Vivarana but also an opponent of Bhamati

In this present work I have made a humble attempt to bringout the origin and development of Advaita Vedanta, the main concepts of Advaita like Adhyasa, Khyati, nature of Maya and Avidya, removal of Avidya, means of knowledge, Concept of Moksha and Jivanmukthi in the light of Ratnaprabha confining myself to chatussutri portion The commentaries on Ratnaprabha, viz , Purnanandiya and Bhagadipika are also introduced

Inspite of my utmost care in proof-reading some mistakes have unfortunately crept in If an occasion arises for a second edition of this work the mistakes will be corrected

**CH. DURGA PRASADA RAO**

1995, June



## ACKNOWLEDGEMENTS

Among the many lights to whom I am grateful for their advice, assistance, and encouragement in writing this book my special thanks are due to

1 Sri Rani Narasimha Sastry and Late Sri Ganti Lakshmi Narayanasastry for teaching me vedanta works viz , Ratnaprabha and Bhamati

2 Sri Maddulapalli Manikya Sastry, who helped me with his lucid explanation of some of the tough nuts in the various philosophical concepts

3 Prof P Srirama murthy, retd head of the department of Sanskrit under whose able guidance this work was brought out

4 Sri O S R L Sarma, department of Sanskrit who taught me the necessary chapters of Samkhya, Nyaya, Purvamimamsa and Uttara mimamsa

5 Prof G Parthasaradhi Rao and Dr G A Sarma of Sanskrit department of Andhra University who encouraged me at various stages during the preparation of this work

6 The Director of G O M.L , Madras and the director of Adyar library Madras for granting me access to some manuscripts of Vedanta

7 Sri A Gopala Krishnamacharya retd lecturer of Y N College, Narsapur who helped me in many ways

8 Sri K G C Hanvithal, Principal, S R R &C V R College, Vijayawada, who helped me in getting this work published

9 Sriman P Venkatacharyulu, Proprietor of Ramanujavani, Mr K.Shyam proprietor of Print-shoppee and Mr V S Prakash, Artist for giving this book an elegant format

10 Dr Y Venkateswara Rao, retd Principal and Sri K V Satyanarayana, retd Vice-Principal of A N R College who helped me with valuble advice and encouragement

11 On a more personal level Iam greatly thankful to my maternal uncle, Sri R Ramamurthy, my brother-in-law Dr R Viswanarayana and my wife Lakshmi kumari for their constant help and Co-operation during the vicissitudes I faced in the preparation of this book

Last but not least, I record my gratitudes to Sri D V.L N Murthy, I A S , the then E O of T T D, and Sri K Subba Rao, the then Editor, Tirumala Tirupati Devasthanams for the handsome financial assistance without which this work could not have seen the light of the day

**AUTHOR**

# उपोद्धातः

लोके प्रायश· सर्वोऽपि जन्तुः "इष्टं मे भूयादनिष्टञ्च माभूत्" इति सुखावाप्तिं दुःखनिवृत्तिञ्च कामयते प्रयतत एव तदर्थम् । सुख द्विविधं सातिशयनिरतिशयभेदात् । ऐहिकामुष्मिकसुखानां कर्मजन्यत्वात्सातिशयत्व – मनित्यत्वञ्च "तद्यथेह कर्मचितो लोक· क्षीयते एवमेवामुत्र पुण्यचितो लोक· क्षीयते" (छा.उ 8.1.6) इत्यादि श्रुत्या "आब्रहम भुवनाल्लोकाः, पुनरावर्तिनोऽर्जुन" (भ.गी 8.16) इत्यादिस्मृत्या "यत्कृतकं तदनित्यम्" इति न्यायेन च स्पष्टम् ॥ एतेषाञ्च पुनः "न तदस्ति सुखं लोके यन्न दुःखकरं भवेत्" इत्याद्युक्त्या दुःखसम्भिन्नत्वमेव बाहुल्येन लोके दरीदृश्यते ॥ यद्यप्यामुष्मिकसुखस्य दुःखसम्भिन्नत्वं नास्ति तथापि तस्य तारतम्ययुक्तत्वादनित्यत्वाच्च तुच्छत्वम् ॥

अपि चानुभूयमानं दुःख त्रिविधम् ॥ आधिदैविकमाधि भौतिकमाध्यात्मिकमिति॥ तत्र मनुष्यमृगादिभिरुत्पन्नं दुःखमाधिभौतिकम् ॥ यक्षराक्षसग्रहादिभिर्जातमाधिदैविकम् ॥ आध्यात्मिकन्तु शारीरं मानसञ्चेति

पुनर्द्विविधम् ॥ वातपित्तादिज शारीर कामक्रोधादिज मानसञ्च ॥ सर्वस्याप्यस्य दुःखस्य कर्मजन्यत्वात् कर्मण· मिथ्याज्ञानहेतुत्वाच्च दुःखनिवृत्तिस्तु मिथ्याज्ञाननिवृत्त्यैव भवति ॥ मिथ्याज्ञान तु यथार्थज्ञाननिवर्त्यम्॥ तच्च ब्रहमसाक्षात्मक "ब्रहमविदाप्नोति परम्" (तै.उ 2.1) इत्यादि श्रुते· ॥ आत्मैव ब्रहमेति "अयमात्मा ब्रहम" (बृ.उ 2.5.19) इत्यादिश्रुतिमूलकम् ॥

तथा चात्मसाक्षात्कारएव मानवजीवनस्य परमोद्देशः तस्य निरतिशयानन्दहेतुत्वात् ॥ उक्तञ्च –

" सोऽश्नुते सर्वान् कामान्" (तै.उ 2.1)

"आत्मनस्तु कामाय सर्वं प्रिय भवति" (बृ. उ 2.4 5)

" आत्मलाभान्नपर विद्यते" (आप ध.सू 1.22.2) इत्यादि श्रुतिस्मृतिभि·॥

स चात्मसाक्षात्कार· वेदान्तवाक्यश्रवणमनननिदिध्यासनैरेव सम्भवति नाऽन्यथा ॥ उक्तञ्च ॥

"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभि·
मत्वा च सतत ध्येयः एते दर्शन हेतव·" (सा.प्र.भा पृ.2)

आत्मस्वरूपप्रतिपादकानि शास्त्राणि दर्शनपदेन व्यपदिश्यन्ते ॥ "दृश्यते ह्यात्मा ऽनेनेति दर्शनम्" ॥ दर्शनानीमानि नास्तिकास्तिकभेदेन द्विविधानि ॥ प्रायशः वेदोपजीवीन्यास्तिकदर्शनानि ॥ तद्भिन्नानि च नास्तिकानि ॥ चार्वाकबौद्धजैनानि नास्तिकानि ॥ साङ्ख्यन्यायमीमांसादर्शनान्यास्तिकानि ॥ मीमांसा च पुन पूर्वोत्तरभेदेन द्विविधा ॥ तत्र वेदस्यउत्तरभागस्तु वेदार्थ ब्रह्मनिर्णायकत्वेन वेदान्तापरनामक. ॥ कर्मापेक्षया ज्ञानस्य अभ्यर्हितत्वात् , परमप्रयोजनवत्वाच्च पूर्वमीमांसापेक्षया उत्तरमीमांसा दर्शनस्यैव प्राधान्यम् ॥ अपि च वेदार्थनिर्णायकत्वात् वेदान्तदर्शनस्यैव सर्वदर्शनापेक्षया प्राधान्यमुपपद्यते ॥

अत एवोक्तं स्मृतौ —

"दद्यान्नावसरं किञ्चित् कामादीना मनागपि
आसुप्तेरामृते· काल नयेद्वेदान्तचिन्तया" इति ॥

अपि च यद्यपि सर्वाणि दर्शनानि आत्मबोधकानि तथापि आत्मस्वरूपप्रतिपादनविषये तानि परस्पर विरूध्यन्ते इति आत्मयाथार्थ्यज्ञानेनैव पुरुषार्थसिद्धिः तद्विपरीते न केवलं पुरुषार्थहानिः किञ्चानर्थपरम्पराप्राप्तिश्च ॥ उक्तञ्च स्मृतौ —

"योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते
किं तेन न कृतं पाप चौरेणात्मापहारिणा" इति ॥ [1]

उक्तञ्चात्रभवद्भि· श्रीशङ्करभगवत्पादै —

एवं बहव · विप्रतिपन्ना युक्तिवाक्य तदाभाससमाश्रयास्सन्त ॥ तत्राविचार्य यत्किञ्चित्प्रतिपद्यमानो निश्रेयसात् प्रतिहन्येतानर्थञ्चेयात् "इत्यादि ॥ तथा चाऽऽत्मयाथार्थ्यज्ञानाय वेदान्तवाक्यविचार· कर्तव्य इति फलितोऽर्थः ॥

ेदान्तशास्त्रस्याधारभूत प्रस्थानत्रयम् ॥ तत्रोपनिषद· श्रुतिप्रस्थानं ब्रह्मसूत्राणि न्यायप्रस्थान, भगवद्गीता च स्मृतिप्रस्थानम् ॥ प्रस्थानत्रये सूत्रप्रस्थान इतरापेक्षया विशिष्यते तस्य श्रुतिस्मृत्योस्साराशरूपत्वाद्युक्तिमत्वाच्च ॥

"लघूनि सूचितार्थानि अल्पाक्षरपदानि च
सारवत्सर्वभूतानि सूत्राण्याहुर्मनीषिणः" इति सूत्रलक्षण विज्ञेयम् ॥

सूत्राणीमानि संसारदु खसन्तप्यमानाना जनाना विमुक्तिप्रदर्शनार्थ भगवता बादरायणेन[2] विरचितानि ॥ अपिच औपनिषदानाञ्च तत्त्वानां [illegible]

विरोधपरिहाराय सूत्राणीमानि विरचितानीति साम्प्रदायिकाना कथनम् ॥ सूत्रेष्वेषु बादरायणेन वेदान्तवाक्याना सारांश न्यायेन प्रतिपादित ॥ अत्र न्यायो नाम पञ्चावयवोपेताधिकरणात्मकन्याय ॥ पञ्चावयवास्तु विषयसशयपूर्वपक्ष – समाधानसङ्गतय· ॥ तदुक्तम् –

"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तर

सङ्गतिश्चेति पञ्चाङ्ग शास्त्रेऽधिकरण स्मृतम्" इति

बादरायणसूत्रेषु अध्यायाश्चत्वार· समन्वयाविरोधसाधनफलाख्या ॥ प्रत्यधिकरण चत्वार पादा ॥

| | | | | | |
|---|---|---|---|---|---|
| प्रथमाध्याये – | 31 | + 32 | + 43 | + 28 | = 134 |
| द्वितीयाध्याये – | 37 | + 45 | + 53 | + 22 | = 157 |
| तृतीयाध्याये – | 27 | + 41 | + 66 | + 52 | = 186 |
| चतुर्थाध्याये – | 19 | + 21 | + 16 | + 22 | = 78 |

इति क्रमेण पञ्च पञ्चाशदधिक पञ्चशत (555) सूत्राणि ॥

उपनिषदर्थप्रतिपादकाना सूत्राणा सर्वप्रथम तत्रभवद्भि भगवत्पादै अद्वैततत्वप्रतिपादक प्रसन्नगम्भीरञ्च भाष्यं विरचितम् ॥

"सूत्रार्थो वार्ण्यते यत्र वाक्यै सूत्रानुकारिभि

स्वपदानिच वर्ण्यन्ते भाष्य भाष्यविदो विदु" इति भाष्यपदस्यार्थ ॥

द्विधा इत द्वीतं तस्य भाव द्वैत भेद ॥ नास्ति द्वैत भेदो यत्र तदद्वैतम् ॥[3] तस्येद विवरणम् – प्रकारद्वयसत्ता द्वैतमित्युच्यते ॥ तथाहि – "इद रजतम्" इत्यत्र इदमवच्छिन्न (चैतन्य) मधिष्ठानं रजतमारोपितम् ॥ तत्रारोपेऽधिष्ठानतादात्म्यं वर्तते॥ आरोपनिष्ठाधिष्ठानतादात्म्यमारोपितञ्च प्रकारद्वयम् ॥ एतादृश द्वय यस्मिन्नुच्यते तत् द्वैतम् ॥ न विद्यते यस्मिन् द्वैत तदद्वैतम् ॥

ब्रहमसूत्राणां श्रीभगवत्पादानन्तर श्रीरामानुजानन्दतीर्थाद्याचार्यै विशिष्टाद्वैतद्वैतादिमतपराणि भाष्याणि निर्मितानि ॥

विशिष्टयो· अर्थात् सूक्ष्मचिदचित्प्रपञ्चविशिष्टस्य कारणस्य ब्रहमण, स्थूलचिदचित्प्रपञ्चविशिष्टस्य कार्यस्य ब्रहमणश्चाद्वैतं विशिष्टाद्वैतम ॥ मध्वाचार्याणामानन्दतीर्था· इति नामान्तरम् ॥ आनन्दतीर्थीयभाष्य क वल द्वैत स्थापयति जीवब्रहमणोः ॥

"जीवेश्वरभिदा चैव जडेश्वरभिदा तथा
जीवभेदो मिथश्चैव जडजीवभिदा तथा
मिथश्च जडभेदो यः प्रपञ्चो भेदसज्ञितः"

इति मध्वाचार्यसिद्धान्तः ।।एवमनेकैराचार्यैःविविधसिद्धान्तप्रतिपादका भाष्याणि निर्मितानि ब्रह्मसूत्राणाम् ।। किन्तु सर्वमतापेक्षया अद्वैते ए महद्वैलक्षण्यमस्ति ।। तथा हि 'आत्मैवेदं सर्वम् (छाउ 7.25.2)

"सर्वं खल्विदं ब्रहम" (छा. उ 3.141) "नेह नानास्ति किञ्चन" (बृ 4.4.19) इत्यादि श्रुत्यर्थे पर्यालेच्यमाने उपनिषत्प्रतिपादितः सिद्धान्तस्तावदद्वैतमेवे प्रतिभाति ।।अत एव भगवत्पाद प्रतिपादितस्याद्वैतसिद्धान्तस्य महान् आदरस्सञ्जात

अपि [4] च शाण्डिल्यभक्तिसूत्रे "आत्मैकपरां बादरायण·" इतिसूत्रे बादरायणमतस्याद्वैते ऐदम्पर्यमुक्तं ज्ञायते ।।

सौरसंहितायाम् — "द्वैतरूपन्तु यद्वस्तु तदज्ञानविजृम्भितम्" [5] इ व्यतिरेकेणाद्वैतमेव प्रतिपादितम् ।। श्रीमच्छङ्करभगवत्पादानां परमगुरू गौडपादाचार्यै — रद्वैतमतस्य वैशिष्ट्यमेवं प्रकटितम् ।। तथाहि —

"स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिताः दृढम्
परस्पर विरुध्यन्ते तैरयं न विरूध्यते" इत्यादि [6]

भगवत्पादैरपि"क्लेशाऽनास्पदत्वात्सम्यग्दर्शनमित्यद्वैतदर्शन स्तूयते"इत्यद्वै दर्शनस्य वैशिष्ट्यं प्रकटितम् ।। [7]

किञ्च विद्यारण्यपादैः —

"अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरु·
अहो ज्ञानमहो ज्ञानमहोसुखमहो सुखम्"

इति परमाश्चर्यकरमद्वैतज्ञान तस्य अवाङ्मानसगोचर· परमानन्दानुभ फलमिति प्रतिपादितम् ।। अत एव वेदभाष्यप्रणेतारोऽपि विद्यारण्यश्रीचरण पूर्ववेदभागं सर्वं कर्मपरत्वेन व्याख्याय, उपनिषद्वाक्यानि सर्वाण्या सिद्धब्रहमपराणीति पञ्चदशीमुखेन प्रतिपादयामासु ।।

श्रीभगवत्पादविरचितस्य भाष्यस्य शारीरकमीमासाभाष्यमिति नाम शरीरमेव शरीरकं कुत्सितत्वात् ।। तन्निवासी अर्थात् शरीराभिमानी शारीरक जीवः ।। शारीरकस्य मीमासा ब्रहमत्वविचार जीवो ब्रहमैवेति विचा शारीरकमीमांसा ।।

एतदद्वैततत्व ऋग्वेदे एव बीजरूपेण सन्दृश्यते ॥ तथाहि –

"एक सद्विप्रा बहुधा वदन्ति" [8] इत्याद्यृक् अद्वैततत्त्वमेव प्रकटितवती दृश्यते॥ तत· प्राचीनकालादारभ्यैव मानवमन· अद्वैते लग्न इति निस्संशय वक्तुं प्रभवामः ॥ वेदस्तु कर्मप्रतिपादक· ॥ कर्मण· उपासना उपासनातो ज्ञानमिति तेषा विकासे क्रमः ॥ उपनिषदः उपासनाप्रतिपादिकाः ज्ञानप्रतिपादिकाश्च ॥ उपासनाप्रतिपादकानामप्युपनिषद्वाक्याना ज्ञाने एवान्तत· तात्पर्यम्॥ तथाच कर्मोपासनासमनुष्ठानफलभूताऽऽत्मतत्वविचारप्रतिपादनपरासूपनिषत्सु "नेह नानाऽस्ति किञ्चन" (कठ उ 4.11) इत्याद्याः श्रुतय· अद्वैतभावमेव प्रकटयन्ति॥ उक्तञ्चात्रभवद्भि· भगवत्पादैः "इष्यते च सर्वोपनिषदा सर्वात्मैक्यप्रतिपादकत्वम्" इति ॥ [9] एवञ्च कर्मोपासनासंहितासु बीजरूपेणाविर्भूतोऽद्वैतसिद्धान्त· उपनिषत्सु भगवदगीतादि ग्रन्थेषु च विकास प्राप्त· दृश्यते ॥ बादरायणाचार्यै· उपनिषदर्थ एव सूत्रेषु पुन· प्रतिपादितः ॥ तदुक्तं भगवत्पादै· "वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम् ॥ वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते" इत्यादि ॥ [10] सूत्रेषु बादरायणाचार्यै· आश्मरथ्य·, औडुलोमि , काष्र्णाजिनि·, काशकृत्स्न , जैमिनि , बादरिः, आत्रेय इति केषाञ्चनाचार्याणा नामानि प्रकटितानि ॥ तेषाञ्च सिद्धान्ता "आर्षवेदान्त" इति नाम्ना विद्वद्भि· व्यवहृयते ॥" श्रीमद्भगवत्पादेभ्य पूर्वेष्वाचार्येषु सुन्दरपाण्डय· द्रविडाचार्य , ब्रह्मनन्दी भर्तृप्रपञ्च·, भर्तृहरि· इत्याद्या· प्राधान्येन गणनीया· ॥अपि च श्रीमद्भगवत्पादपरमगुरुभि गौडपादाचार्यै माण्डक्योपनिषदर्थ प्रपञ्चीकर्तुकामै काश्चन कारिकाः विरचिता ॥ तदुपरि भगवत्पादैः भाष्य कृतम् ॥ श्रीमद्भगवत्पादैस्तुउपनिषदौ, ब्रहमसूत्राणा, भगवद्गीतायाश्च भाष्य विरचितम् ॥ अपि च नैके ग्रन्थाः विरचिताः स्वतन्त्रेण पथा ॥ तेष्वद्वैतसिद्धान्त दृढ प्रतिष्ठापित· ॥ भगवत्पादानां कालस्तु 788 – 820 A D. इति चारित्रकाणा निर्णय ॥ [12]

भगवत्पादानन्तरमद्वैतसिद्धान्तः भामतीवार्तिकविवरण प्रस्थानभेदेन त्रिधा विभक्त तत्रापि प्राधान्येन द्विधा भामती विवरणाप्रस्थानभेदेन ॥ केषाञ्चन सिद्धान्तानां विषये भामतीविवरणमतयो· भेदाभिप्राय एव प्रस्थानद्वयस्य हेतु ॥ तयो प्रस्थानयो मध्ये सिद्धान्तपरा भिप्रायभेदेषु सत्स्वपि उभयोरपि गम्य तावदद्वैतस्थापन मेवेत्यतोऽद्वैतसिद्धान्तस्य भङ्गो न सञ्जात· ॥

तत्रादौ भगवत्पादशिष्यै सूत्रभाष्यतात्पर्य प्रपञ्चीकर्तुकामै पञ्चपादिकाख्या व्याख्या विरचिता।। परन्तु सेय व्याख्या केनचित् दुष्टेन नाशिता चतुस्सूत्रीमात्रावशिष्टा पुनरपि तैर्निर्मिता पञ्चपादाना जाता।।तस्यास्सर्वशास्त्रसगहरूपाया चतुस्सूत्रीटीकाया. विवरणं चक्रु· विवरणाचार्या. श्रीप्रकाशात्मश्रीचरणा ।। इयञ्च विवरणटीका पाण्डित्यपूर्णा प्रामाणिकी विवरणप्रस्थानस्य मूलभूता।। भगवत्पादशिष्यै सुरेश्वराचार्यै बृहदारण्यकभाष्यवार्तिकं, तैत्तिरीयोपनिषदभाष्यवार्तिकं, नैष्कर्म्यसिद्धि इत्यादिग्रन्थाः विरचिता ।।एते वार्तिकप्रस्थानस्य मूलकर्तार ।।अद्वैते भामतीनामकतृतीयप्रस्थानस्य कारणभूता वाचस्पतिमिश्राः।। वाचस्पतिमिश्रविरचिता भामती अनेकाभिः व्याख्योपव्याख्याभि. समलकृता भामतीप्रस्थानस्य मूलभूता विराजते।।

प्रायश. अद्वैतसिद्धान्तप्रतिपादनपरा पण्डिता भामत्या अथवा विवरणस्य च व्याख्यान कुर्वन्त· तयोर्मार्गमनुसृत्य स्वातन्त्र्येण ग्रन्थान् विरचितवन्त दृश्यन्ते।। भामतीप्रस्थानग्रन्थेषु अखण्डानन्दसरस्वतीकृता ऋजुप्रकाशिका अमलानन्दकृतः कल्पतरु, अल्लालसूरिकृत भामतीतिलकम् अच्युतकृष्णानन्दकृता भावदीपिका च प्रधान्येन गणनीया·।। कल्पतरो· व्याख्या परिमलाख्या अप्पय्यदीक्षितकृता सुप्रसिद्धा।। कल्पतरोरपरा व्याख्या आभोगाख्या लक्ष्मीनृसिहकृ–ताऽतिनवीना काचिदुपलभ्यते।। एवमेव भामतीमतमनुसृत्य विरचितेषु स्वतन्त्रग्रन्थेषु अन्नम्भट्टकृता मिताक्षरा, अद्वैतानन्दसरस्वतीकृत ब्रहमविद्याभरणम् इत्याद्या· प्रधान्येन गणनीया ।।

एवमेव विवरणप्रस्थानमनुसृत्य निर्मितेपु व्याख्याग्रन्थेषु अखण्डानन्दमुनिकृतं तत्वदीपनम्, विष्णुभट्टोपाध्यायकृत ऋजुविवरणम् इत्याद्या सुप्रसिद्धा ।।स्वतन्त्रग्रन्थेषु तु अनुभूतिस्वरूपाचार्यकृत 'प्रकटार्थविवरण' विद्यारण्यकृत. 'विवरणप्रमेयसंग्रहः', रामानन्दसरस्वतीकृतो विवरणोपन्यासश्चातीव सुप्रसिद्धा ।।

ब्रहमसूत्रभाष्यस्य आनन्दगिरिभि. न्यायनिर्णयाख्या स्वतन्त्रा व्याख्या विरचिता।। रत्नप्रभाकारै· "वृद्धास्त्वेवमाहु." इति वृद्धपदनिर्देशेन आनन्दगिरीयं मत प्रदर्शितम्।।[13]आनन्दगिरिकृता व्याख्या तावदतिविस्तृता सुबोधा मूलतात्पर्यस्य सौलभ्येन बोधिका तत्र तत्र मीमांसान्यायाना विस्तरेण लेखनादन्वर्थसंज्ञिका च।। जगन्नाथाश्रमैः भाष्यदीपिकाख्या व्याख्या ब्रहमसूत्रशांकरभाष्यस्योपरि निर्मिता।। रत्नप्रभाकारैः टीकायोजनेति नाम्ना तेषां व्याख्या परामृष्टा।।[14] परन्तु तेषा व्याख्याग्रन्थ.
3 सम्प्रति नोपलभ्यते।।

एव बहव ब्रहमसूत्रभाष्यव्याख्यारूपा स्वतन्त्राश्च ग्रन्था अद्वैतसिद्धान्तप्रपञ्चनाय परिरक्षणाय च अनेकै. असख्याकाश्च विरचिता दृश्यन्ते।। तेषु भगावत्पादहृदयगत भावं प्रकटीकर्तुमनेकै प्रयत्न. कृत।। तेष्वन्यतमा श्री रामानन्दसरस्वत्य·।। तै विरचिता रत्नप्रभाख्या ब्रहमसूत्रभाष्यव्याख्याऽद्वैत मतजिज्ञासुभि· पण्डितप्रकण्डैश्चाऽधीयमानाऽध्याप्यमाना च चकास्ति।। व्याख्यानेऽस्मिन् प्रचीनव्याख्यातॄणा मतानि प्रस्तावितानि परामृष्टानि च।। भगवत्पादहृदय दर्शिनीचेय व्याख्या नाऽतिविस्तृता सरला सुबोधा च।। उक्तञ्च

"विस्तृतग्रन्थवीक्षाया मलस यस्य मानसम्
व्याख्या तदर्थमारब्धा भाष्यरत्नप्रभाभिधा"।। (र प्र पृ 2 श्लो 6)

"नानाविधग्रन्थजात वीक्ष्यसम्यग्यथामति
शारीरकस्य भाष्यस्य कृता व्याख्या सता मुदे"।। (र.प्र ग्रन्थान्ते)

भाष्यमेव रत्न तस्य प्रभा भाष्यरत्नप्रभा।। तथाच भाष्यार्थप्रकाशकत्वादिय भाष्यरत्नप्रभेत्यन्वर्थसंज्ञिका।।एते रत्नप्रभाकारा पञ्चपादिकाविवरणकारै विशेषेण प्रभाविताः।। एवमेव प्रकटार्थकारणामनुभूतिस्वरूपाचार्याणां प्रभावोऽपि रत्नप्रभाकाराणामुपरि महान् दृश्यते।। अत्र किञ्चिद्वक्तव्यमस्ति।। प्रकटार्थकारा न केवलं विवरणमतपक्षपातिनः किञ्च भामतीमतव्यतिरेकिणोऽपि।। तै भामतीकारा विशेषेणाधिक्षिप्ता.।।[15] भामतीव्याख्यातृभि. अमलानन्दपादै अनुभूतिस्वरूपाचार्यकृताना सर्वेषामाक्षेपाणा समाधानमुक्तं तेषा नामानुक्त्वा।। अनुभूतिस्वरूपाचार्यै: प्रभाविता रत्नप्रभाकारा "एतत्सूत्रभाष्यभावाऽनभिज्ञाः सन्यासाश्रमधर्म श्रवणादौ विधिनास्तीति वदन्ति" इत्यादि वाक्यै भामतीकारान् विशेषेणाक्षिपन्ति।।[16]

रत्नप्रभाकारैः स्वव्याख्याने पञ्चपादिकाविवरणम्, भामती, न्यायनिर्णय·, टीकायोजना, प्रकटार्थविवरणम् इत्यादि ग्रन्थानां परामर्श. कृत इति तान्सर्वान् सम्यक्परिशील्य रत्नप्रभा कृतवन्तो ग्रन्थकारा इति प्रतिभाति।।

अस्मिन् शारीरकमीमासादर्शनभाष्ये प्राधान्येन चतुस्सूत्रीभाष्ये एव जिज्ञासुभि विशेषपरिश्रमः क्रियते।। अद्वैतसिद्धन्तप्रतिपादनदृष्ट्या विचार्यमाणे चतुस्सूत्रीभागस्याधिक प्राशस्त्यमस्ति।।सर्वोप्युत्तरमीमासाशास्त्रार्थ चतुस्सूत्रीभाष्ये

एव भगावत्पादै सग्रहेण प्रतिपादितः दृश्यते।। अस्मिन् सर्वप्रथमतः उपोदघातरूपेण अध्यासभाष्यमुक्तम्।। तस्मिन् अध्यासस्वरूप विस्तरेण प्रदर्शितम्।। ततो ख्यातिवादनिरूपणावसरेतइतरमनिरासपूर्वकंवेदान्तसम्मताऽनिर्वचनीयख्यातिः स्थापिता।।

"अथातो ब्रहमाजिज्ञासा" इति प्रथमसूत्रस्य भाष्ये ब्रहमजिज्ञासायामधिकारी जिज्ञासायाः आवश्यकता, ब्रहमण· स्वरूपं, ज्ञानकर्मणोः व्यत्यासः, ब्रहमण· सिद्धवस्तुत्वञ्चैवमादि विषयाः प्रतिपादिता·।। "जन्माद्यस्य यतः" इति द्वितीयसूत्रस्य भाष्ये जिज्ञास्यत्वेन प्रतिपादितस्य ब्रहमण· लक्षणमुक्तम्।। तत्र ब्रहमण अभिन्ननिमित्तोपादानकारणत्व शास्त्रेण प्रतिपादितम् अनुमानेन तस्य द्रढीकरणं कृतम्।।

"शास्त्रयोनित्वात्" इति तृतीये सूत्रे ब्रहमण वेदकारणत्वं वेदैकवेद्यत्वञ्च प्रतिपादितम्।।

"तत्तु समन्वयात्" इति तुरीये सूत्रे ब्रहमप्रतिपादकोपनिषद्वाक्यानां क्रियाङ्गत्वमुपासनाङ्गत्वञ्च निराकृतम्।।ततो मोक्षस्वरूपंमोक्षसाधनं,जीवन्मुक्तिस्वरूपञ्च प्रदर्शितम्।। एवञ्चास्मिन् चतुस्सूत्रीभागे एव जगत्, ब्रहम, मोक्ष मोक्षोपाय·, प्रमाणानि, जावन्मुक्तिः इत्यादि सिद्धान्ताना प्रतिपादना संग्रहेण कृता।। तदनन्तराध्यायेष्वेतेषा सिद्धान्तानां स्वरूपं समग्रेण प्रदर्शितमिति अद्वैतसिद्धान्तस्य अवगाहनाय चतुस्सूत्रीभागे नैवालमिति वक्तु प्रभवाम·।। अपि च चतुस्सूत्रीभागास्यायमपरो विशेष· यदस्मिन् भागे प्रवृत्तानि चत्वारि सूत्राणि चतुर्णामधिकरणाना मूलभूतानीति एकसूत्रात्मकानीमान्यधिकरणानि।। तदितराधिकरणानि तु बहुसूत्रात्मकानीति तदपेक्षया चतुस्सूत्रीभागस्य वैशिष्टयम् ।।तत· प्रायशः व्याख्यातृभिस्सर्वैरपि चतुस्सूत्रीभागे एव स्वपाण्डित्यप्रकर्ष· प्रदर्शितः सिद्धान्तश्च समग्रतया प्रतिपादित दृश्यते ।। रत्नप्रभाकाराणामप्ययमेव पन्था· ।। किञ्च रत्नप्रभायाः व्याख्याद्वयमपि तावत्पर्यन्तमेव समुपलभ्यतेत्यस्माभि· चतुस्सूत्रीभाग एव परिशोधना — विषयत्वेन स्वीकृतः ।।

तत्रादौ रत्नप्रभाकर्तृत्वविषये पण्डितलोके भिन्नाभिप्रायाः सन्दृश्यते इति प्रथमतः रत्नप्रभाकर्तृत्वविचार क्रियते ।।

## रत्नप्रभाविमर्शे द्वितीयोऽध्यायः

# रत्नप्रभाव्याख्यानोपव्याख्यानानि

# रत्नप्रभाकारः रामानन्दः

रत्नप्रभाया तत्कर्तु· नाम न कुत्रापि निर्दिष्टम् ॥ किन्तु परम्पराऽऽगतोयमभिप्राय यत् रत्नप्रभाकाराः गोविन्दानन्दसरस्वत्य इति ।।प्रायशः सर्वाण्यपि हस्तलिखितपुस्तकानि गोविन्दानन्दकर्तृत्वमेव प्रदर्शयन्ति रत्नप्रभाया. ।। तथाहि —"ब्रह्मसूत्रभाष्यव्याख्या रत्नप्रभा गोविन्दानन्द सरस्वती कृता" इत्यादि ।।

अपि च रत्नप्रभाव्याख्यानान्ते ग्रन्थान्तगद्यमेवं प्रकारेण सन्दृश्यते ।। तथाहि—

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमद्गोपालसरस्वती पूज्यपादशिष्य श्री गोविन्दानन्दभगवत्कृतौ शारीरक — मीमासाव्याख्यायां रत्नप्रभायाम्" इत्यादि ।।[2]

प्रायश तादृशं ग्रन्थान्तगद्यमनुसरद्भिः आचार्य राधाकृष्ण [3] दासगुप्त [4] प्रभृतिभि· दर्शनशास्त्रचारित्रकैः गोविन्दानन्दकर्तृत्वमेवाभिप्रेत रत्नप्रभाया ।।एवमेव श्री T R सुब्रह्मण्यमहाभागै· [5] श्री राजन्नशास्त्रिमहोदयैश्च [6] गोविन्दानन्दकृतित्वेनैवाभिमता रत्नप्रभा ।।एवञ्च अन्यैरपि बहुभिर्विमर्शकैश्चारित्रकैश्च गोविन्दानन्दकर्तृकत्व — मेवाभिप्रेत रत्नप्रभाया. ।।

परन्तु सम्यक्परिशीलिताया रत्नप्रभाया विचार्यमाणेषु च ग्रन्थान्तरेषु रत्नप्रभाप्रणेतार गोविन्दानन्द सरस्वतीभ्योऽन्याः इति ते च रामानन्दसरस्वत्य इति च ज्ञायते ।। एतदधिकृत्य इति P.P. सुब्रह्मण्यशास्त्रिभि काश्चनोपपत्तय प्रदर्शिताः एवमेव अद्वैतग्रन्थकोशस्य उपोद्‌घातेऽपि काश्चनोपपत्तयः प्रदर्शिताः ।।इहास्माभिरपि काश्चनोपपत्तय. प्रदर्श्यन्ते ।।

1 रत्नप्रभायामय श्लोक. दृश्यते ।। "कामाक्षी दत्त दुग्ध प्रचुरसुरनुत प्राज्यभोज्याभिपूज्य, श्रीगौरीनायकाभित्प्रकटितशिवरामार्यलब्धात्मबोधै , श्रीमदगोपालगीर्भि· प्रकटितपरमाद्वैतभासास्मितास्य, श्रीमदगोविन्दवाणी चरणकमलगो निर्वृतोऽह यथाऽलि "[9]

अत्र "श्रीमदगोविन्दवाणीचरणकमलगो निर्वृतोऽह यथाऽलि" इति ग्रन्थकृत्प्रार्थनया रत्नप्रभाकारा गोविन्दानन्दसरस्वत्य न भवितुमर्हन्तीति तेषामन्तेवासिना केनाप्यन्येन रत्नप्रभाकर्तृत्वेन भवितव्यमिति च स्पष्टमवगम्यते ॥ अत्र गुरुपरम्परायां ग्रन्थकारै परमेष्ठिगुरुत्वेन शिवरामार्या, परमगुरुत्वेन गोपालसरस्वत्यः, गुरुत्वेन गोविन्दानन्दसरस्वत्य· प्रस्तुता इति तेभ्यो भिन्ना. एव रत्नप्रभाकारा. इति वक्तव्यम् ॥

2 अपिच रत्नप्रभायामिद वाक्यमस्ति ॥ तथाहि – "विप्रतिपत्तीना प्रपञ्चो निरासश्च विवरणोपन्यासेन दर्शित. सुखबोधाय इतीहोपरम्यते" इति ॥[10] वाक्यमिदं रत्नप्रभाविवरणोपन्यासयोरेककर्तृकत्वं सूचयति ॥ विवरणोपन्यासस्तु रामानन्दकृतित्वेन प्रसिद्धि गतः ॥अतस्त एव रत्नप्रभाकर्तारोऽपि भवन्तीति निश्चयेन वक्तु शक्यते ॥ किञ्च रत्नप्रभायामादौ रामस्तुति· कृता ॥ [11] एवमेव विवरणोपन्यासेऽपि राम एव प्रस्तुत. ॥ [12]

अपि च ग्रन्थयोर्द्वयोः "कामाक्षी दत्त दुग्धप्रचुरसुरनुतप्राज्य –

भोज्याभिपूज्यः" इत्यादि श्लोक. दृश्यते॥[13] तथा च ग्रन्थयोरुभयोः कृता रामस्तुतिः कामाक्षीत्यादि श्लोकश्च तयोरेककर्तृकत्व द्रढयति ॥ अत्र विवरणोपन्यासग्रन्थस्य सम्पादकैः श्री दामोदरशास्त्रिसहस्रबुद्धिमहाभागैः "अत्र कामाक्षीति श्लोकः असम्बद्धः इति प्रतिभाति" इत्युक्तम् ॥परन्तु तैरसबद्धकारणानि न प्रदर्शितानि ॥ [14] परन्तु तैरसंबद्धकारणानि न प्रदर्शितानि॥

3. रत्नप्रभायाः एका व्याख्या अभिव्यक्ताख्या पूर्णानन्दसरस्वतीकृता विराजते या च पुनः पूर्णानन्दीयमिति प्रसिद्धि गता ॥ तत्रादौ "श्रीमच्छारीरक भाष्यं व्याचिख्यासुः श्रीरामानन्दाचार्य "इत्याद्युक्त ग्रन्थकारैः॥[15] अपिच समन्वयभाष्यव्याख्यानविवरणे" कार्यान्तर मध्ये नभातीति रामानन्दीय पाठान्तरमत्र समीचीनम्" इत्युक्तम्॥

तथाच वाक्यद्वयेनाऽनेन रत्नप्रभानिर्मातार रमानन्दा एवेति निश्चयेन वक्तुं शक्यते ॥

4 अपि च रत्नप्रभाया. अपरा व्याख्या भागदीपिकाख्या अच्युतकृष्णानन्दविरचिता काचित्समुपलभ्यते॥ तद्व्याख्यानान्ते "श्रीमत्स्वयंप्रकाशानन्दसरस्वतीशिष्याच्युत–

कृष्णानन्दतीर्थस्य कृतौ भाष्यरत्नप्रभायामीक्षत्यधिकरण समाप्तम् ।। रामानन्दीयस्याच्युतकृष्णानन्दतीर्थीय समाप्तम्" इत्येव रूपेण लिखितमस्ति ।। [17] एतेनेद ज्ञायते यद्रत्नप्रभाकारा रामानन्दा एवेति ।। अत्रास्माभि. किञ्चिद्वक्तव्यमस्ति ।। अभिव्यक्ताकारा पूर्णानन्दाः ब्रह्मविद्याभरणकाराणाम् अद्वैतानन्दसरस्वतीना शिष्या इति "उक्तमस्मदगुरुभि ब्रह्मविद्याभरणे" इत्यनेकश उक्तत्वादवगम्यते ।।[18] अद्वैतानन्दसरस्वतयस्तु रामानन्दसकाशाल्लब्धविद्या इति ब्रह्मविद्याभरणादेव ज्ञायते ।।[19] एवञ्च अद्वैतानन्दसरस्वतीना शिष्या. पूर्णानन्दा रत्नप्रभाकाराणा रामानन्दसरस्वतीनां प्रशिष्या भवन्ति ।। एवमेव अभिव्यक्ताकारा. अच्युतकृष्णानान्दसरस्वत्य· ब्रह्मविद्याभरणकारान् विशेषेणास्तुवन् ।। तथाहि —

"गुरोरपि गरीयान्मे य कलाभिरलकृत
अद्वैतानन्दवाण्याख्य तं वन्दे शमवारिधिम्" इति [20]

तथा अच्युतकृष्णानन्दा. पूर्णानन्दसरस्वतीनां सामयिका. भवितुमर्हन्तीति ताभ्या प्रतिपादित रामानन्दकर्तृत्व रत्नप्रभाया. उपपन्नमेव भवति ।।

5 शृङ्गेरी पीठसाम्प्रदायानुयायिन रत्नप्रभाकर्तार रामानन्दमेव विश्वसन्ति ।। [21]

6 एवमेव रत्नप्रभाया रामानन्दीयमिति व्यवहारोऽपि तत्कर्तृकत्वमेव सूचयति ।।

7. अपि च रत्नप्रभाया चतुर्थाध्यायव्यख्यानारम्भे "रामनामास्मि" [22] इत्युक्तत्वात् 'अह नाम्ना रामोऽस्मि" (Rama is my name) इत्यर्थः सूचितः ।। तत रामानन्दा एव रत्नप्रभाप्रणेतारः भवितुमर्हन्तीति अद्वैतग्रन्थकोशस्य उपोदघातादवगम्यते ।। [23]

आधुनिकेष्वपि श्री पोल्क श्रीरामशास्त्रिमहाभागै [24] श्रीतङ्गस्वामिमहोदयैश्च [25] रत्नप्रभाकर्तृत्वेन रामानन्दा एवाभिमता. ।। एवञ्चोपरिनिर्दिष्टै. प्रमाणै रत्नप्रभाकारा रामानन्दा एवेति निश्चप्रच वक्तु प्रभवामः

केचन पुन· रामानन्दगोविन्दानन्दयोः व्यक्त्यैक्य प्रतिपादयन्ति ।। तथाहि — श्रीकृष्णमाचार्यमहाभगा रामानन्दगोविन्दानन्दयो व्यक्त्यैक्य प्रतिपादयन्ति ।। रामभक्त्यतिशयत्वात् गोविन्दान्दस्यैव रामानन्द इति व्यवहार. इति तेषां कथनम् ।।[26] किन्तु "श्रीमदगोविन्दवाणीचरणकमलगो निर्वृतोऽह यथाऽलिः" इति रत्नप्रभागतं वचनं गोविन्दानन्दरामानन्दयोर्व्यक्तयैक्य वादस्य बाधक भवति ।। अत्र गोविन्दानन्दा गुरव तच्छिष्यास्तु रामानन्दा इति भिन्नव्यक्तित्व तयोरवश्यमङ्गीकर्तव्यम् ।।

अत्र हाल् (Hall) पण्डितस्तु एवमभिप्रैति यत् रामानन्दाः स्वगुरोर्नाम्ना रत्नप्रभा कृतवन्त· ।। इति [27] नैतत्समीचीनम् ।। ग्रन्थकर्तुर्नाम रत्नप्रभायां न कुत्रापि निर्दिष्टत्वात् ।।

रत्नप्रभाकर्तृत्वविषये श्री राजन्नशास्त्रि — महोदयानामयमभिप्रायः [28] यत् वारणासि धर्मसुधी· वयसि च चरमे गोविन्दानन्दसरस्वतीभ्यो. चतुर्थाश्रमदीक्षां स्वीचकार ।।तदनन्तरं तेन रत्नप्रभा विरचिता ।।रत्नप्रभाया स्वनाम्नो ऽ — ख्यापनात् निजदीक्षागुरुवर्यगोविन्दानन्दसस्मरणाच्च स्वगुरुनाम्नैव व्यवहृता, रत्नप्रभाकर्तृत्वेन प्रथा गता ।। अयञ्च धर्मसुधी वारणासि वशज· ।। तस्य पूर्वीकाः वाराणस्यां न्यवसन्निति हेतो तेषा वारणासीति वंश नाम (Surname) सम्प्राप्तम् ।। अयञ्च कृष्णानदीतीरस्थ "पेदपुल्लिवररु" ग्रामवासी आसीदिति तस्य वंशजा· तत्रस्थाः विश्वसन्ति तमेव वंशस्य मूलपुरुषत्वेन कथयन्ति च ।। धर्मसूरिरयं पर्वतनाथसूरेः यल्लमाम्बाया समुत्पन्नः ।। अस्य पिता षड्दर्शनीनिष्णात· ।। स वादेन जनार्दनाख्यं पण्डित जित्वा तस्य वादकेसरि बिरुद स्वय जग्राह ।। वैष्णवञ्च पण्डितं प्रच्याव्य मायावादिभयङ्कराख्यबिरुदेनाऽपि ख्यातः लोके ।। अनेन पञ्चपादिकाविवरणव्याख्यापि विरचितेति "व्याख्या विख्यात कीर्तेः विवरण गुरुवाक्सांख्यमुख्यागमानाम्" इत्यादिश्लोकादवगाम्यते ।। [29]

रामानन्दै· पुनः स्वकीयो ग्रन्थ. गुरोर्नाम्ना प्रसिद्धिं गमित· इति योऽश· विद्यते तत्र तु प्रबलं प्रमाण नैवोपलभ्यते ।। अत. रामानन्दा एव रत्नप्रभाप्रणेतार· इति निश्चप्रचं वक्तु पारयाम ।।

## 2. रामानन्दस्य गुरुशिष्यपरम्परा

रत्नप्रभागत कामाक्षीदत्तदुग्धप्रचुर — सुरनुतप्राज्यभोज्याधिपूज्य." [30] इत्यादि श्लोकात् रामानन्द सरस्वतीनां गुरुपरम्परा ज्ञायते ।। तथाहि — श्लोके च तस्मिन् ग्रन्थकारैः रामानन्दाचार्यै· शिवरामार्या., तेषा शिष्या गोपालसरस्वत्य., तेषाञ्च शिष्याः गोविन्दानन्दसरस्वत्यश्च निर्दिष्टा. ।।तथाच ग्रन्थकाराणा शिवरामार्याः परमेष्ठिगुरवः, गोपालसरस्वत्य· परमगुरव, गोविन्दानन्दास्तु गुरव. इति गुरुपरम्परा स्पष्टैव ।।

किञ्च ब्रह्मविद्याभरणप्रणेतार अद्वैतानन्दसरस्वत्य रामानन्दसरस्वतीनां सकाशादुपात्त — समग्रशारीरकसूत्रभाष्य इति ब्रह्मविद्याभरणादेवावगाम्यते ।।

तथाहि : "रामानन्दमुनिं मुनीन्द्रनिकरैरासेवितं सर्वदा" [31]

"रामानन्दपदाम्भोजं प्लव कृत्वा मनोहरम्

चत्वारोप्यर्णवा एते समुत्तीर्णा. यथामति" इत्यादि ॥ [32]

अद्वैतानान्दसरस्वतीना शिष्यौ स्वयप्रकाशानन्दपूर्णानन्दौ ॥ तयो पूर्णानन्दसरस्वत्य. अभिव्यक्ताख्यां रत्नप्रभाव्याख्या विरचित ग्रन्तः ॥ भागदीपिकाख्यायाः रत्नप्रभाव्याख्याया · प्रणेतारोऽच्युतकृष्णानन्द.सरस्वत्यः स्वयंप्रकाशानन्दसरस्वतीनामन्तेवासिनः इति

"यो मे गुरुर्गुरुस्साक्षात्

जगतामप्यशेषत·

माधवस्यापरामूर्ति

तं भजे स्वप्रभ सदा" इति वचनादवगम्यते ॥ [33]

अपि च भागदीपिकाकारै. —

"गुरोरपि गरीयान्मे य. कलाभिरलंकृतः

अद्वैतानन्दवाण्याख्यः त वन्दे शमवारिधिम्" इति [34]

भक्त्यतिशयेन संभाविताः अद्वैतानन्दसरस्वत्य इति त एव ग्रन्थकाराणां परमगुरव इति सम्भाव्यते ऽस्माभि. ॥ श्रीतङ्गस्वामिपण्डितैस्तु "अयमच्युतकृष्णानन्दः स्वयंप्रकाश— अद्वैतान्दसरस्वत्योः शिष्यः" इत्युक्तम् ॥[35] अत्र यद्यच्युत — कृष्णानन्द अद्वैतानन्द सरस्वतीनामपि शिष्यस्तर्हि पूर्णानन्द — अच्युतकृष्णानन्दौ सतीर्थ्यौ भवतः ॥ परन्त्वत्र प्रमाणं मृग्यम् ॥ एवञ्चात्र रामानन्द सरस्वतीना गुरुशिष्यपरम्परा इत्थ निरूपयितु शक्यते ॥ तथाहि —

शिवरामार्य.

गोपालसरस्वती

गोविन्दान्दसरस्वती

रामानन्दसरस्वती

अद्वैतानन्दसरस्वती

पूर्णानन्दसरस्वती ☆ स्वयंप्रकाशानन्दसरस्वती

अच्युतकृष्णानन्दसरस्वती

सरस्वतीसम्प्रदाय

अद्वैतमतानुयायिषु सन्यासिषु दश सम्प्रदाया . वर्तन्ते । तथाहि –

"तीर्थाश्रमवनारण्य गिरिपर्वतसागरा·

सरस्वती भारती च पूरी नामानि वै दश " इति ।।

श्री भगवत्पादशिष्येषु पृथ्वीधराचार्या अन्यतमा .इति तेषा सकाशे दशसम्प्रदायानुवर्तिनः सन्यासिनः आसन् इति ज्ञायते।।[36] तथा चायं दशविधसन्यासिना सम्प्रदाय तत्प्रभृत्यारब्ध. अथवा तत्काल एवाऽऽसीदिति निर्णेतु शक्यते ।।

तेषु पूरी भारती सरस्वती नामान शृङ्गेरीमठसाम्प्रदायानुयायिन ।। गिरि अरण्य वन नामान . ज्योतिर्मठसम्प्रदायानुयायिनः ।। आश्रम तीर्थ नामान· द्वारकामठसम्प्रदायानुयायिन·।। पर्वत सागर नामान पूरीमठसम्प्रदायानुयायिन इति श्रीशङ्करदिग्विजयग्रन्यस्य उपोद्घातादवगम्यतो।। [37]

सरस्वतीसम्प्रदायस्तु काञ्चीमण्डलसम्बन्धीति अद्वैतग्रन्थकोशस्य उपोद्घाते उक्तम्।। [38] तथा चैते रामानन्दसरस्वत्यः काञ्चीमण्डलसम्प्रदायानुयायिन इति ज्ञायते।। तै कृता कामाक्षीत्यादि [39] स्तुतिरपि तमेवाभिप्राय द्रढयति ।।

रामानन्दसरस्वतीनां काल :

रत्नप्रभाकाराणामधिकाल कोविदाना नानामतान्यवलोक्यन्ते ।। दासगुप्तपण्डितै रत्नप्रभाकाराणा कालः चतुर्दशशतकमित्येकत्र, [40] षोडशशतकमित्यन्यत्र च [41] निरूपितः दृश्यते।। दासगुप्तपण्डितानामभिप्राये रत्नप्रभाकारा गोविन्दानन्दसरस्वत्यः।। रामानन्दस्तु विवरणोपन्यासकर्तार. ।। कालश्चतेषा सप्तदशशतकस्य पूर्वभागः ।। [42]

शारिरकमीमासाभाष्यवर्तिकप्रणेतारो नारायणसरस्वत्य रत्नप्रभाकाराणां सामयिका· सतीर्थ्याश्च।। ग्रन्थस्तेषां गद्यमयो भाष्यस्य व्यारव्यानरुपश्च।। नारायणसरस्वत्य लघुचन्द्रिकाकाराणां गौडब्रहमानन्दसरस्वतीनां गुरवः इति कालश्च तेषां 1600 – 1700 इति तङ्गस्वामिपण्डितै. निश्चिततत्वात् 43 स एव कालः रत्नप्रभाकाराणामपि भवितुमर्हति।।

अपि च ब्रहमविद्याभरणकर्तारः अद्वैतानन्दसरस्वत्य· रामानन्दसरस्वतीनां सका: ादुपात्तसमग्रशारीरकमीमासासूत्रभाष्य इति प्रगेवनिरूपितम्।। कालश्च तेषा 1762 इति श्री अनन्तकृष्णशास्त्रिणां मतमनुसृत्य कार्लहेच् पोटर् पण्डितै निर्णीतः।।[44] तथाच रामानन्दा तत्पूर्ववर्तिनो वा तत्सामयिकाश्च वा भवितुमर्हन्तीति निश्चीयते।।

श्री तङ्गस्वामिपण्डितै. रामानन्दस्य काल 1570 – 1650 इति निर्णीत [45] तथाच पूर्वोक्तै· प्रमाणै सप्तदशशतकवर्तिन· रामानन्दसरस्वत्य इति निश्चीयते ।।

रामानन्दसरस्वतीनमितरा कृतय

रत्नप्रभाकारै रामानन्दैरधोनिर्दिष्टा ग्रन्था विरचिता ।।

अ विवरणोपन्यासः

ग्रन्थोऽयं विवरणमतसाराशस्य ।। विवरणप्रस्थानग्रन्थेषु प्रायश अयमेव चरमो ग्रन्थ इति दासगुप्तपण्डिता. मन्वते।। [46] ग्रन्थोऽयं रत्नप्रभारचनाया पूर्वमेव विरचित. इति " विप्रतिपत्तीनां प्रपञ्चो निरासश्च विवरणोपन्यासविवरणप्रमेयसग्रहयोरैक्यमभिप्रेतम्।। तन्न समीचीन विवरणोपन्यासस्य पार्थक्येनोलभ्यमानत्वात्।।

आ. वाक्यवत्तिव्याख्या

अमुद्रितोऽय ग्रन्थ मद्रपुरराजकीयहस्तलिखितपुस्तकालये लक्ष्यते।। "वाक्यवृत्तिव्याख्याने रामानन्दीयेऽयमर्थः विस्तरेण प्रतिपादित" इति पूर्णानन्दीयवचनात् [50] ग्रन्थस्यास्यप्रणेतार. रामानन्दा एवेति स्पष्टमवगम्यते।।अस्यैव लघुवाक्यवृत्तिप्रकाशिकेत्यपर नामेति श्री दासगुप्तपण्डितः।।[51] वाक्यवृत्तिस्तु भगवत्पादकृतिरिति पण्डितानां विश्वास.।।

इ ब्रहमामृतवर्षिणी

ब्रहमसूत्रवृत्तिरुपात्मकोऽयंग्रन्थ रत्नप्रभाकारैरेव विरचित इति पण्डितानामभिप्रायः।। किन्त्वाधारा नोपलभ्यन्ते।। ग्रन्थयोरुभयो· प्रदर्शित रामभक्त्यतिशयत्वमेवैक कर्तृकत्वविषयनिरूपणे हेतुरिति तेषा कथनम्।। परन्तु नाऽयसमीचीन. पन्थाः।।ब्रहमामृतवर्षिणीकारा. रामानन्दाः मुकुन्दगोविन्दश्रीचरणानां शिष्याः।। [52] अतस्ते रत्नप्रभाकारेभ्यो भिन्ना इति विज्ञेयम्।।

रत्नप्रभाकार· रामभक्त

रत्नप्रभाकारा रामभक्ता ।।रत्नप्रभाव्याख्या रामस्तुत्या आरब्धा रामस्तुत्यैव समाप्तिं गमिता।। अपिच प्रत्यधिकरण रामस्तुत्यैवारब्धम्।। किञ्च रत्नप्रभाकारै· यथावकाश राम प्रस्तुत ।। रामायणप्रसक्तिश्च यथावकाशमानीता च।।

तद्यथा –

वेद· स्वविषयादधिकार्थज्ञानवज्जन्यः प्रमाणवाक्यत्वात् व्याकरणरामायणादित्यनुमानान्तरम्।। [53]

अपि च –

"रामरावणयोर्युध्द रामरावणयोरिव"

" सीताऽक्लिष्ट इवाऽऽभाति कोदण्डप्रभया युत " [54] इत्यादीनि तेषां भक्ति प्रकटयन्ति।।

## पूर्णानन्दसरस्वती

रत्नप्रभां दुरुहा मत्वा तदर्थप्रपञ्चनाय पूर्णानन्देन अभिव्यक्ताख्या व्याख्या निर्मिता।। तदुक्तम् रत्नप्रभां दुरुहाञ्च व्याकरोमि यथामति इत्यादि।। [55] पूर्णानन्देन विरचित्वादस्यव्याख्यानस्य पूर्णानन्दीयमितिव्यवहार ।। इयञ्च पूर्णानन्दसरस्वती ब्रहमविद्याभरणकर्तु अद्वैतानन्द सरस्वतेरन्तेवासीति "उक्तमस्मदगुरुभि ब्रहमविद्याभरणे" इत्यनेकश· उक्तत्वादवगम्यते।। [56] किञ्च स· ग्रन्थादावपि

"अद्वैतवाणीचरणाब्ज युग्म
मुक्तिप्रद तत्प्रणतोऽस्मि नित्यम्"

इति गुरुत्वेन प्रस्तुतत्वाच्च तन्निर्धार्यते।। अद्वैतानन्दस्तु रामानन्दसरस्वतीनां सकाशादधीतशारीरकमामासाभाष्य· इतिपूर्वमेव निरुपितम्।। तथा चायं पूर्णानन्द· रत्नप्रभाकाराणा रामनन्दसरस्वतीना प्रशिष्य इति निश्चीयते।।

रत्नप्रभायाः अपरा व्याख्या भागदीपिकाख्या अच्युतकृष्णानन्दविरचिता चोपलभ्यते।। तस्या ग्रन्थकृता अद्वैतानन्दसरस्वती प्रस्तुत· इति पूर्णानन्दाच्युतकृष्णानन्दौ समकालिकाविति निश्चीयते।। अय पूर्णानन्द 1650 – 1750 मध्यकाले आसीदिति श्री तह्नस्वामिमहाभागा ।। [57]

पूर्णानन्दः पुरुषोत्तमानन्दस्य शिष्यः अद्वैतानन्दसरस्वत्याः प्रशिष्य इति (Descriptive Catalogue) नामके ग्रन्थे उक्तम् ।। [58] परन्तु विषयोऽयं ग्रन्थस्थश्लेकाद्विरुध्यते।। पूर्णानन्देन परमहंसयतेर्नाम गुरुत्वेन निर्दिष्टम्।। एवञ्चाद्वैतानन्दसरस्वत्योऽपि सम्भाविताः।। परन्तु पुरुषोत्तमानन्दस्य नाम न निर्दिष्टम्।।

पूर्णानन्दकृता व्याख्या तावदतिसरला चतुस्सूत्री पर्यन्ता च समुपलभ्यते।। अयञ्च पूर्णानन्दः कृष्णभक्तः इति ग्रन्थाद्यश्लोकात्, प्रत्यधिकरणमङ्गलश्लोकेभ्यः. "यद्यप्यग्रावच्छेदेन वृक्षे श्रीकृष्णसंयोगः" [59] इत्यादि वाक्येषु च श्रीकृष्णप्रस्तावनया चावगम्यते।।

## पूर्णानन्दस्येतरे ग्रन्थाः

1. अधिष्ठानविवेकः (8 H 54 AL)
2. तत्वम्पदार्थविवेकः (R 1382.M.G.O M L &A L 40 E.54)
3. श्रुतिसारः (T S M L 6775)[60] अपि चानेन पूर्णानन्देन –
4. लक्ष्मीधरकृताऽद्वैतमकरन्दस्य टीका
5. अन्तःकरणप्रबोधटीका
6. आत्मज्ञानोपदेशटीका
7. आत्मतत्वविवेकटीका
8. श्री दक्षिणामूर्तिस्तोत्रव्याख्या।। इत्यादयो ग्रन्थाः विरचिताः इति Karl.H Potter महोदयस्य ग्रन्थादवगम्यते [61] एवमेव
9. अवधूतटीका (N.W 328)
10. अष्टावक्रगीताव्याख्या (N C C I)

इत्येतेऽपि ग्रन्थाः विरचिताः इति अमुद्रित (NEW Catalogus Catalogorum) नामकेभ्यो ग्रन्थेभ्यश्चावगम्यते।। पूर्णानन्देन रत्नप्रभाटीकायां

" ब्रहमविद्याभरणम् " " संक्षेपशारीरकः" "कल्पतरूः "
" वाक्यवृत्तिव्याख्या " इत्यादि ग्रन्थाः प्रस्ताविताः।।

## अच्युतकृष्णानन्दसरस्वती

रत्नप्रभायाः अपरा व्याख्या भागदीपिकाख्या अमुद्रिता मद्रपुरशासकीयहस्तलिखित पुस्तकालये समुपलभ्यते।। [62] ग्रन्थकारोऽच्युतकृष्णानन्दः।।ग्रन्थोऽयमडयरपुस्तकालयेऽपि समुपलभ्यते।। [63] अपि च ग्रन्थोऽयं विश्वभारतीशान्तिनिकेतनपुस्तकालये, अनन्तशयन पुस्तकालये च समुपलभ्यते इति तञ्जस्वामिमहाभागाः।। [64]

अयमच्युतकृष्णानन्दः स्वयंप्रकाशानन्द सरस्वतीनां शिष्यः इति अधोनिर्दिष्टश्लोकेभ्योऽवगम्यते।.

" यो मे गुर्गुरुस्सक्षा ज्जगतामप्यशेषतः
माधवस्यापरामूर्तिस्तंभजे स्वप्रभं सदा" ( भा. दी. श्ले. 4)
"श्रीमत्स्वयंप्रकाशाख्यगुरोर्लब्धात्मवेदनम्" (भा. दी. श्ले. 8)
" यो मे विश्वेश्वरक्षेत्रं विश्वेश्वरसमो गुरु
समध्यास्ते स्वयंज्योतिवाणीसंज्ञो भजामि तम् "। [65]

अयमच्युतकृष्णानन्दः अद्वैतानन्दसरस्वतीनां विषयेऽपि महतीं भक्तिं प्रदर्शितवान् । तथाहि —

" गुरोरपिगरीयान्मे यः कलाभिरलंकृतः
अद्वैतानन्दवाण्याख्यः तं वन्दे शमवारिधिम्" ।। इति ।। [66]

एतेनाच्युतकृष्णानन्दः तेषां शिष्यः इति पूर्णानन्दस्य सहाध्यायीति च निर्णीयते।।अथवा अद्वैतानन्दः अच्युतकृष्णानन्दः स्वयंप्रकाशाद्वैतानन्दयोश्च शिष्यस्तर्हि अयं रत्नप्रभाकाराणां प्रशिष्यो भवति।। यदि स्वयंप्रकाशानन्दः अद्वैतानन्दसरस्वतेश्शिष्यस्तर्हि पूर्णानन्दोऽच्युतकृष्णानन्दादधिकवयस्को भवेत् ।। अपि च भागादीपिकारचनायाः पूर्वमेवाभिव्यक्ता विरचिता स्यादिति निश्चयेन वक्तुं शक्यते ।।

अच्युतकृष्णानन्दस्य काल· 1650 – 1750
मध्यभाग इति तङ्गस्वामिमहोदयाः ।।[67]अयमच्युतकृष्णानन्दः अत्यन्तार्वाचीन· दक्षिणदेशवासी अष्टादशशतकस्य मध्यभागोऽस्य कालः इति श्री राघवन् महाभागाः।। [68]व्याख्या चेयमीक्षत्यधिकरणपर्यन्ता।। तदुक्तं ग्रन्थकारेण।।

जिज्ञासासूत्रमारभ्य
प्रागानन्दमयोक्ति तः
भाष्यरत्नप्रभा नाम्नीं
व्याकुर्वे भक्तितः कृतिम्  इति (भा.दी.पृ.।)

अपि च 'सुशोधयितुमारब्धा व्याख्येयं नाऽन्य हेतुतः' इति व्याख्यानरचनायामाशयोऽपि प्रकटितः स्वयं ग्रन्थकारेण।। व्याख्या चेयमन्यूनाऽनतिरिक्ताक्षरा हृदयङ्गमा च।। अयञ्च बहु ग्रन्थप्रणेता।।

अ. कठोपनिषच्छांकरभाष्यटीका – अमुद्रिता चेयं काठक शांकरभाष्यटीका महीशूरहस्तलिखितपुस्तकालये लभ्यते।। [69]

आ. कृष्णालङ्कार – सिद्धान्तलेशसंग्रहव्याख्यानरूपोऽयं ग्रन्थः अद्वैतमञ्जरीग्रन्थमालायां (कुम्भघोणे) अप्पय्यदीक्षितेन्द्रग्रन्थमालायाञ्च मुद्रितः उपलभ्यते।।

इ. वनमाला – तैत्तिरीयोपनिषच्छांकरभाष्यव्याख्यात्मकोऽयं ग्रन्थः वाणीविसासमुद्रणालये मुद्रितः।।

ई. भावदीपिका –भामतीव्याख्यानरूपा चेयं कल्पतरू परिमलसंग्रहरूपाऽमुद्रिता अडयरहस्तलिखितपुस्तकालयेऽस्ति ।।[70]

उ. मानमालाः प्रमाणप्रमेयप्रमाप्रमातृनामभिः प्रकरणैः पदानां भेदनिर्वचनपूर्वकं प्रमाणस्वभावं वर्णयन् अयं प्रकरणग्रन्थ : अडयरपुस्तकमालायां मुद्रित· ग्रन्थस्यास्य रामानन्दभिक्षुणा विवरणाख्या व्याख्या कृता ।।

अपि च : " ब्रहमतत्वबोधिनी "
" कुतूहला "
" महावाक्यदर्पणम् "

" स्वानुभूतिविलासः " – इत्येतेऽपि ग्रन्थाः कृष्णानन्देन विरचिताः इति पोटरमहाभागाः ।। [71]

## रत्नप्रभाविमर्शे तृतीयोऽध्यायः

# अध्यासः

ब्रहमसूत्राणां शारीरकमीमांसाभाष्यं विरचितवद्भिः श्री शङ्करभगवत्पादैः आदौ उपोद्घातरूपेण अध्यासभाष्यमभाषि ।। अत्र प्रभमतः अध्यासस्वरूपनिरूपणे भाष्यकाराणामाशयः एवं प्रतिपादयितुं शक्यते ।।

तथाहि :– सर्वमतापेक्षया अद्वैते महद्वैलक्षण्यमस्ति ।।

" आत्मैवेदं सर्वम् " (छां. उ. 7.25.2) "ब्रहमैवेदममृतं पुरस्तात्" (मु. उ. 2.2.11) "सर्वं खल्विदं ब्रहम " (छा. उ. 3.14.1)

" नेह नानास्ति किंचन" (बृ.उ.4.4.19) "अतोऽन्यदार्तम् " (बृ. उ. 3.4.2) "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मंता नान्योऽतोऽस्ति विज्ञाता (वृ.उ.3.7.23) इत्यादि श्रुत्यर्थे पर्यालोच्यमाने सर्वं दृश्यमानं जीवत्वेश्वरत्वजगदात्मकं ब्रहमरूपमिति, अन्यत्किमपि नास्तीति, कर्तृत्वभोक्तृत्वादिना प्रतिभासमानो जीवः नित्यशुद्धबुद्धमुक्तस्वभावात् ब्रहमणोऽन्यो नास्तीति सर्वं दृश्यमानमधिष्ठानस्वरूपज्ञानादेव नश्यतीति च गम्यते।। एतत्सर्वमात्माधिष्ठानभ्रमाङ्गीकारे एवोपपद्यते नाऽन्यथा।। अस्य च गमकमादिमम् "अथातो ब्रहमजिज्ञासा" इति सूत्रम्।। अथ– साधनचतुष्टयसंम्पत्त्यनन्तरं, ब्रहमज्ञानाय वेदान्तवाक्यविचारः कर्तव्यः इति सूत्रस्यास्य रत्नप्रभाव्याख्यानानुसारेण निर्णेतव्योऽर्थः।।

लोके हि द्विविधं फलमनुभूयते।। एकं फलं सुखरूपम्।। द्वितीयन्तु दुःखनिवृत्तिरूपम्।। अन्यत्सर्वं सुखप्राप्तिसाधनत्वेन दुःखनिवृत्तिसाधनत्वेन

च इष्यते।। सूत्रकारैस्तु सुखात्मकं फलं वा दुःखनिवृत्यात्मकं फलं वा नोक्तम्।।परन्तु ज्ञानमेवात्र फलत्वेनोक्तमवगम्यते।।अत्र ज्ञानस्य सुखात्मकत्वं वा दुःखनिवृत्यात्मकत्वं वा न सम्भवतीति तस्य कथं फलत्वमित्याशंका स्यात्।। तत्रेदं समाधानम् – ब्रहमज्ञाने हि जाते दुःखनिवृत्तिः भवति ब्रहमानन्दप्राप्तिश्च भवति इति फलद्वयसाधनत्वं ब्रहमज्ञानस्य सम्भवतीत्यभिप्रायं मनसि निधाय 'अथातो ब्रहम जिज्ञासा' इति सूत्रं प्रणिनाय भगवान् वेदव्यासः।।

लोके हि ज्ञानस्य फलमज्ञाननिवृत्तिरेव यथा प्रकाशस्यान्धकारनिवृत्तिः फलम्।। न ततोऽधिकतरं फलं दृश्यते।। एवं सति एतादृशब्रहमज्ञानस्य सुखप्राप्ति दुःखनिवृत्यात्मक फलद्वयसाधनत्वं कथमित्यवश्यं विचारणीयं भवति।।

अत्रैवमुच्यते – अज्ञानेन सच्चिदानन्दरूपं ब्रहमतत्वमावृतं सत् जीवेश्वरजगदात्मना भासते।। अज्ञानवशादेव स्वरूपानन्दस्तिरोहितः दुखञ्च परिकल्पितम्।। तथाहि – सुखमनुभवतः निद्रादोषवशेनाऽत्यन्तं दरद्रः "दरिद्रोऽस्मि" दुःखीति सूचितः "तत्र मम रक्षकः कोऽपि नास्ति, महारण्ये पतितः "कथं वा मम जीवनम्" इति स्वप्नभ्रान्तिः यदि भवति तदा सार्वभौमत्वं सुखं सर्वं तिरोहितं दुःखञ्च परिकल्पितम्।। अत्र सार्वभौमोऽपि अन्यस्वरूपमापन्नः स्वरूपं सुखं विस्मृत्य काल्पनिकं दुःखमनुभवति।। स एव प्रबुद्धश्चेत् काल्पनिकं सर्वं दुःखं निवर्तते पुनः सार्वभौमानन्दं प्रतिपद्यते च।। तत्र स्वरूपानन्दस्याननुभवे काल्पनिकदुःखस्यानुभवे आवरणविक्षेपशक्तियुक्तं स्वरूपावरकं एव कारणम्।। आवरणशक्तया स्वरूपमावृत्य विक्षेपशक्त्या कर्तृत्वभोक्तृत्वप्रमातृत्वरूपं संसाराख्यं दुःखं कल्पयति।। एवं सत्वरजस्तमोगुणात्मकावरणशक्तियुक्तमूलाज्ञानं सच्चिदानन्दस्वरूपं परमात्मतत्त्वमावृत्य, परिच्छिन्नजीवभावं परिकल्प्य तत्र

कर्तृत्वभोक्तृत्वधर्मादिसंसारबन्धं परिकल्प्य संसारारण्ये सञ्चालयति जीवमिति वक्तव्यम्।। तथा च सुप्तस्य प्रबोधवत् आज्ञाननिद्रायां सुप्तस्य ब्रह्मसाक्षात्कारात्मकप्रबोधे जाते स्वप्नप्रायजीवत्वसंसारभ्रमादिकं निवर्तते स्वस्यानन्दश्च लभ्यते च।।

अतः सुखप्राप्ति दुःखनिवृत्तिश्च फलमनुक्त्वा "ज्ञा" धातुना ब्रह्मज्ञानमेव फलत्वेनोक्तवान् सूत्रकारः इति गम्यते।।तथा च ब्रह्मज्ञानं दुःखनिवृत्तिसाधनं सुखावाप्तिसाधनञ्च भवतीति परमं सिद्धान्तं मनसि निधाय भगवान् भाष्यकारः आदावध्यासभाष्यं रचयामास।। पूर्णानन्दीयेऽपि सारांशरूपेणायमेवार्थः प्रदर्शितः।।

तथाहिः– "नित्यज्ञानसुखात्मा
केनायं शोकसागरे मग्नः
इत्यालोच्य यतीन्द्रः
प्रागध्यासं प्रदर्शयामास" [1]

अस्मिन् भाष्ये स्थूणानिखननन्यायेन [2] आत्मनि आनात्माध्यासः न संभवतीति "युष्मदस्मत्प्रत्ययगोचरयोः" इत्यादिना अध्यासासंभवं सयुक्तिकं प्रतिपाद्य "तथाप्यन्योन्यस्मिन्नन्योन्यात्मकताम्" इत्यादिना अध्यासस्समर्थितः भगवत्पादैरिति प्रतिभाति।। अत्र भगवत्पादप्रदर्शितं पूर्वपक्षमतमेवं प्रतिपाद्यते रत्नप्रभाकारैः।। तथाहि–

लोकेऽध्यासं प्रति अधिष्ठानसामान्यज्ञानं, पूर्वानुभूतसंस्कारः, सादृश्यं दोषसम्प्रयोगौ च कारणानि।। तथा च शुक्तिरजताध्यासे यथार्थरजतविषयकानुभवजन्यसंस्कारसम्भवात्, इदमिति सामान्यज्ञानस्य च सत्वात् शुक्तिरजतयोः धालधल्यरूपसादृश्यस्य विद्यमानत्वात्, शुक्तिशकले चक्षुस्सन्निकर्षस्य च सत्वात् "शुक्ताविदं रजतमित्यध्यासः भवितुमर्हति– अत्र त्वात्मनि अधिष्ठान सामान्यज्ञानाभावात्, सम्प्रयोगाभावात्, चिज्जडयोः सादृश्याभावात्, सर्वस्यापि प्रपञ्चस्य मिथ्यात्वेन सत्यप्रपञ्चस्याभावात्, सत्यप्रपञ्चविषयकानुभवजन्य संस्काराभावाच्च कथमात्मन्यनात्माध्यासः

इति पूर्वपक्षाभिप्रायः।।

अत्रात्मानात्मनोः परस्परवैरूप्यं, ऐक्यायोग्यत्वञ्च युष्मदस्मदित्यादि वाक्येन भगवत्पादैः प्रदर्शितम्।।तच्च रत्नप्रभाकारैरेवं विस्तरेण व्याख्यातम्।।

तथाहि – तत्र युष्मदस्मत्पदाभ्यां पराक्प्रत्यक्त्वेनात्मानात्मनोः वस्तुतः विरोधः उक्तः।। प्रत्ययपदेन तयोः प्रतीतितः विरोधः उक्तः।। प्रतीयते इति प्रत्ययः अहङ्कारादिरनात्मा दृश्यतया भाति, आत्मा तु प्रतीतित्वात्प्रत्ययः स्वप्रकाशतया भाति।। गोचरपदेन व्यावहारतः विरोधः उक्तः।। युष्मदर्थः प्रत्यगात्मतिरस्कारेण कर्ताहमित्यादि व्यवहारगोचरः, अस्मदर्थस्तु अनात्मप्रविलापेन अहं ब्रह्मास्मीति व्यवहारगोचरः इति त्रिधाऽपि आत्मानात्मनोर्विरोधः।। [3]

एवमेव चिज्जडयोस्तयोरात्मानात्मनोर्मध्ये दीपघटयोरिव तादात्म्यमपि न सम्भवतीति स्पष्टीकृतं रत्नप्रभाकारैः।।

एवञ्चात्मनि आनात्माध्यासः न सम्भवतीति पूर्वपक्षे प्राप्ते सिद्धान्तः।।

आत्मन्यनात्माध्यासः "अहं कर्ता " "अह भोक्ता" इति प्रात्यक्षिकानुभवस्य सत्वात् नाऽनुपपत्तिः।। तत्राध्याससामग्री अप्यस्त्येव।। तथाहि–

अहमिति सामान्यज्ञानमात्मज्ञानमस्त्येव।। आत्मप्रपञ्चयोः सत्वेन प्रतीयमानत्वात् सत्वेन सादृश्यमस्त्येव।। अविद्यादोषोप्यस्त्येव।। अध्यासं प्रति संस्कार मात्रस्यैव कारणत्वेन पूर्वभ्रमजन्यसंस्कारस्योत्तरभ्रमं प्रति कारणत्वेन अनुभवजन्यसंस्कारोप्यस्त्येवेति पूर्वपक्षं निरस्याध्यासः आत्मनि सम्भवत्येवेति समर्थितः।।

तत्र रत्नप्रभाकारैः "विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोः" इत्यत्र विषयत्वं नाम दृश्यत्वं तच्चानात्मन एव तच्च चिद्भास्यत्वरूपम्।। आत्मनस्तु चिद्रूपत्वमेव नतु चिद्भास्यत्वरूपं विषयत्वम्।। तथा च अविषये आत्मनि कथमनात्माध्यासः सर्वोहि पुरोऽवस्थिते विषये विषयान्यरमध्यस्यति

प्रत्यगात्मनस्तु अविषयत्वात् कथ तस्मिन् अध्यासः इत्याशंक्य आत्मनोऽपि विषयत्वमस्त्येवास्मत्प्रत्ययविषयत्वादित्युक्तम्।।तत्रास्मत्प्रत्ययविषयत्वं नाम अहमाकारकवृत्तिविषयत्वम्।। युष्मत्प्रत्ययविषयत्वं नाम इदमित्याकारकवृत्तिविषयत्वम्।।तथाच आत्मानात्मनोर्वृत्तिविषयत्वे समाने सति विषयविषयिणोरिति कथनं कथं सङ्गच्छते इति तु अस्माभिः आलोचनीयो विषयः।। अत्रोक्तं रत्नप्रभाकारै.।। भानभिन्नत्वेसति भानप्रयोज्यसंशयनिवृत्यादिरूपफलभाक्त्वं विषयत्वमेकं, भानभिन्नत्वरहितं भानप्रयोज्यसंशयनिवृत्यादिफलभाक्त्वं विषयत्वमपरमिति विषयत्वं द्विधानिरूपितम्।। * तथा चानयोर्द्वयोर्विषयत्वयोर्मध्ये भानभिन्नत्वघटित विषयत्वस्यात्मन्यसम्भवेऽपि भानप्रयुक्तसंशयनिवृत्यादिफलभाक्त्वात् द्वितीयरूपं विषयत्वं संभवत्येवेति समर्थितम्।। तत्रायमभिप्रयः भानं नाम वृत्तिप्रतिबिम्बितं चैतन्यम्।।तद्यथा – "अयंघटः"इत्यत्र घटचक्षुस्संयोगानन्तरं घटाकारवृत्तौ जातायां सत्यां तत्र वृत्तौ घटावच्छिन्नचैतन्यं प्रतिबिम्बते।। घटज्ञानात्पूर्वं"घटम् न जानामि"इत्यनुभूयमानमज्ञानं घटाकारवृत्त्या नाश्यते।। वृत्त्यभिव्यक्त चैतन्येन घटो भास्यते।। तथा च घटे विषयत्वसमन्वयः।।

भानभिन्नत्वं चैतन्यभिन्नत्वं घटे वर्तते।। भानप्रयुक्तसंशयनिवृत्यादि अर्थात् घटाकारवृत्यभिव्यक्तचैतन्यरूपज्ञानेन 'अयं घटो वा न वा' इति संशयः निवर्तत एव।।तथा च भानप्रयुक्तसंशयनिवृत्यादिफलभाक्त्वं नाम फलाश्रयत्वं अर्थात् संशयविपर्ययविषयत्वाभावः।।

एतादृशविषयत्वं सर्वेष्वपि विषयेष्वस्त्येव।।आत्मनि तु भानभिन्नत्वं नास्ति।।तत्र भानं नाम चैतन्यं तद्भिन्नत्वं अर्थात् चैतन्यभिन्नत्वं चैतन्ये नास्तीति भानभिन्नत्वघटितं विषयत्वं न सम्भवति।। भानप्रयुक्तसंशयनिवृत्यादिफलभाक्त्व न्त्वात्मन्यस्त्येव।।
तथाहिः– भानं नाम वृत्तिः।। वृत्तिप्रयुक्तावरणभङ्गाश्रयत्वं आत्मन्यस्त्येवेति विषयत्वमात्मनोऽपि सम्भवतीति सुष्ठु प्रतिपादितं रत्नप्रभायाम्।।

अत्र लक्षणपरभाष्यं सम्भावानापरभाष्यं प्रमाणपरभाष्यञ्चेत्यध्यासभाष्यं त्रिधा विभक्तम् ।। तथाहि –

" आह कोयमध्यासो नाम " इत्यारभ्य " एकश्चन्द्रः सद्वितीयवत् " इत्यन्तं लक्षणपरभाष्यं, "कथं पुनः " इत्यारभ्य "ऽावमविरूद्दः प्रत्यगात्मन्यनात्माध्यासः" इत्यन्तं सम्भावनापरभाष्यं, "तमेतमविद्याख्यं " इत्यारभ्य "सर्वलोकप्रत्यक्षः " इत्यन्तं प्रमाणपरभाष्यञ्चेति विज्ञेयम्।।

तंत्रादौ पूर्वपक्षी " आह कोऽयमध्यासो नाम " इति वाक्येन अध्यासलक्षणं किमिति पृच्छति।। अस्य शास्त्रस्य तत्वनिर्णयप्रधानत्वेन वादकथात्वद्योतनार्थमाहेति परोक्तिरिति रत्नप्रभाकाराः ।। [5] सिध्दान्ते तु भगवत्पादैः "स्मृतिरूपः परत्र पूर्वदृष्टावभासः "इति अध्यासलक्षणं प्रदर्शितम्।। [6] ऽातद्व्याख्यानावसरे रत्नप्रभाकारैः "अत्र ' परत्रावभास' इत्येव लक्षणं शिष्टं पदद्वयं तदुपपादनार्थमित्युक्तम्।। [7] तत्र परत्र : शुक्तिशकलादौ , अवभासः परस्य रजतस्यावभासः।। ऽाकस्मिन्वस्तुनि अन्यवस्त्वात्मकवृत्तिरेवाध्यासः इत्युक्तं भवति।। दृष्टं दर्शनं पूर्वानुभवः पूर्वानुभवजन्यः संस्कारजन्यः इत्युक्तं भवति।। तथा च पूर्वदर्शनादवभास्यत इति पूर्वदृष्टावभासः।। स्मृतिरूपः इत्यत्र स्मर्यते इति स्मृतिः (सत्यरजतादिः).

स्मृतेः रूपमिव रूपं यस्य सः स्मृतिरूपः इत्यर्थस्वीकारेण स्मर्यमाणसदृशः इत्यर्थः फलति।। ऽावञ्च प्रपञ्चभ्रमोऽपि पूर्वप्रपञ्चानुभवजन्यसंस्काराधीनः, पूर्वप्रपञ्चसदृशः सन्ततं प्रवाहरूपेणानुवर्तते इति विवृतम्।। अयमध्यासः साद्यनादिभेदेन द्विविधः।। अत्र सादित्वं जन्यत्वमनादित्वमजन्यत्वम्।। अहङ्काराध्यासः सादिः अविद्याचितोरध्यासोऽनादिः ।।अत्र द्वितीयस्यानादित्वे–
–

" जीव ईशो विशुध्दाचित्
तथा जीवेशयोर्भिदा
अविद्या तच्चितोर्योगः
षडस्माकमनादयः"

इत्यभियुक्तोक्तिः प्रमाणम्।

तत्र साद्यनाद्यध्याससाधारणलक्षणन्त्वेवमुक्तं रत्नप्रभाकारैः ।।"ऽकावच्छेदेन स्वसंसृज्यमाने स्वात्यन्ताभाववत्यव भास्यत्वमध्यस्तत्वम् " इति ।। [8].

अस्य लक्षणस्य समन्वयप्रकारश्चेत्थमुक्तम्।।तथाहि रजताध्यासे एकावच्छेदेन इदन्त्वावच्छेदेन स्वसंसृज्यमाने – अत्र स्वपदं अध्यस्तत्वेनाभिहितवस्तुपरं तच्च रजतं, आरोपरजतेन स्वसंसृज्यमाने शुक्तिशकले वस्तुतःस्वात्यन्ताभाववति, पारमार्थिकत्वावच्छिन्न प्रतियोगिताकरजताभाववति अवभास्यत्वम्: " इदं रजतम्" इति भासमानत्वं रजतेऽस्तीति लक्षण समन्वयः।।

अत्रायमभिप्रायः।।

यत्र यद्वस्त्वस्तीति भासते तत्रैव तद्वस्तु नास्तीत्युच्यते।। लोके हि "घटवद्भूतलम् " इत्यत्र यस्मिन् भूतले घटोऽस्तीति प्रतीयते तस्मिन्नेव घटाधिकरणे घटो नास्तीति प्रतीतिर्न भवति अनुभवविरूद्धत्वात्।। अत्राध्यासस्थले तु " इदं रजतम् " इति रजतत्वेन प्रतीयमाने शुक्तिशकले सहस्रजनानुभवविषयत्वेऽपि परमार्थतस्तत्र रजतस्याभावात् स्वात्यन्ताभाववत्यवभास्यत्वमस्त्येव।।

एवञ्च ऽकावच्छेदेन – आत्मत्वावच्छेदेन स्वात्यन्ताभाववति – जीवत्वेश्वरत्वजगदात्मक – दृश्यात्यन्ताभाववति, आत्मनि (ब्रह्मणि ) वस्तुतः स्वात्यन्ताभाववति – पारमार्थिकत्वावच्छिन्नप्रतियोगिताक दृश्यात्यन्ताभाववति, अवभास्यत्वं – जीवत्वेश्वरत्व – जगदात्मकदृश्ये लक्ष्यमाणत्वाल्लक्षणसमन्वयः।।

एवं "स्वयमहम् " इत्यत्र [9] स्वयन्त्वावच्छेदेन प्रत्यगात्मनि कूटस्थेऽहङ्कारादेः संसर्गकाले तदत्यन्ताभावस्य – सत्वात् कूटस्थकल्पिताहङ्काराद्यर्थस्याध्यासे लक्ष्ये लक्षणसमन्वयः ।। नैयायिकास्तु "कपिसंयोगी वृक्षः मूले न इति प्रतीत्या अग्रदेशे कपिसंयोगो वर्तते मूलदेशे तन्नास्तीति कपिसंयोगाधिकरणाभावे वृक्षे कपिसंयोगस्य सत्यत्वमङ्गीकुर्वन्ति।।

किञ्च घटापसरणानन्तरं घटो नास्तीति घटाधिकरणे एव प्रतीतिमभ्युपगच्छन्ति।।वेदान्तिनस्तु न तथा – यस्मिन् काले यदवच्छेदेन यद्यस्मिन् प्रतीयते तस्मिन् काले तदवच्छेदेन तत्तत्र नास्त्येवेति सर्वथा तत्र

परमार्थतोऽसत्वमेवाभ्युपगच्छन्ति ।। अत्र भावाभावयोरेकत्र सत्वाङ्गीकारेऽनुभवविरोधः इति पूर्वपक्षे प्राप्ते मिथ्यात्ववादिनामेतादृशविरोधस्वलङ्कार ऽवेति समाधानमुक्तम्[10]।। तथा च सर्वलक्षणविलक्षणमेव ऽातदध्यासलक्षणमित्यवश्यमभ्युपगन्तव्यम्।। ऽातदध्यासनिष्कृष्टलक्षणमव्याप्त्यतिव्याप्त्यसंभव दोषनिवृत्तिपूर्वकं पूर्णानन्दीये विस्तरेण निरूपितम् ।। भगवत्पादैः अध्यासनिरूपणे "अहमिदम्" "ममेदम्" इति उदाहरणद्वयं प्रदर्शितम्।। आध्यात्मिककार्याध्यासेषु अहमिति प्रथमोऽध्यासः।। अत्राहमित्यनेन मनुष्योऽहमिति तादात्म्याध्यासो दर्शितः।।"ममेदम्"इत्यत्र ममेदं शरीरमिति संसर्गाध्यासः इति रत्नप्रभाकाराः[11]।। अत्र तादात्म्यसंसर्गयोः को भेदः इत्याशंकायां "सत्तैक्ये सति मिथोभेदस्तादात्म्यम्" इति तादात्म्य स्वरूपः प्रदर्शितः रत्नप्रभायाम् ।। तथा चाद्वैतेऽवश्यं ज्ञातव्यमेतद्यत्तादात्म्याध्यास इत्युक्तौ द्वयोर्वस्तुनोस्सतोः ऽाकस्मिन् वस्तुनि अपरवास्त्वात्मना ग्रहणमिति न वक्तव्यम्।। तथा चेत् अद्वैतव्याघातः स्यात्।। शुक्तिरजताध्यासे शुक्तिरजतयोस्सतोः शुक्तिशकले रजताध्यासः इति न वक्तव्यम्।। परन्तु शुक्तिशकलमेव तूलाज्ञानेनावृतं सत् रजतात्मना भासते इति वक्तव्यम्।। तथा भानमेव तादात्म्याध्यासः इत्युच्यते।। अत एव भगवत्पादैः " शुक्तिका हि रजतवदवभासते एकश्चन्द्रः सद्वितीयवत्" इति अध्यासद्वयं दृष्टान्तत्वेन अभिहितम्[12] तत्र शुक्तिशकलं रजतात्मना भासते इति अन्यस्य वस्तुनः अन्यवस्त्वात्मना भाने दृष्टान्तः ।। एकस्य वस्तुनः अनेकवस्त्वात्मना भाने तु "एकश्चन्द्रः सद्वितीयवत् " इति दृष्टान्तः ।।

प्रकृते आत्माधिष्ठानभ्रमस्याध्यासे दृष्टान्तद्वयमप्यनुकूलमेव।। मूलाज्ञानेन आवृतं परमात्मतत्वं जीवत्वेश्वरत्वजगदात्मना भासते, अन्यवस्त्वात्मना भासते अनेकवस्त्वात्मना च भासते।। तथा च सर्वैरपि ज्ञानिभिरज्ञानिभिश्च ब्रह्मतत्वमेव दृश्यते।। ज्ञानिभिस्तु सर्वं ब्रह्मात्मना दृश्यते अज्ञानिभिस्तु जीवेश्वरजगदात्मना दृश्यते।।

अत्र नित्यजीवने अनुभवसिध्दाः अध्यासाः केचन प्रदर्श्यन्ते ।।

शुक्तौ रजताध्यासः, रज्ज्वां सर्पाद्यध्यासः, स्थाणौ पुरुषाध्यासः, सर्पे

रज्ज्वध्यासः, पुरुषे स्थाण्वध्यासः, समुद्रतरङ्गे नीलशिलात्वाध्यासः गुञ्जापुञ्जे मर्कटादीनामग्नित्वाध्यासः, नीरूपे आकाशे नीलत्वाध्यासः कटाहाकाराध्यासश्च, नयनरश्मिषु केशोण्ड्रकाध्यासः, काविलादिदोषेण शुक्ले शङ्खे पीतत्वाध्यासः, मण्डूकवसाञ्जनादिदोषेण वेणुदण्डेषु सर्पत्वाध्यासः, जपाकुसुमसन्निधौ शुध्दे स्फटिके लोहितत्वाध्यासः, कर्तरिसंस्कारसंस्कृते पटे पुण्डरीकमुकुलत्वाध्यासः, [13] तथा जले नीलत्वाध्यासः इत्येवमाद्याः दृष्टान्तत्वेन प्रदर्शनीयाः भवन्ति ।।

अध्यासस्वरूपनिरूपणे भगवत्पादैः अनिर्वचनीयख्यातिः अङ्गीकृता।। अनिर्वचनीयत्वं नाम सत्वासत्वाभ्यां वक्तुमशक्यत्वम्।। प्रपञ्चः सद्रूपश्चेत् ब्रह्मवदबाध्येत नित्य एव स्यादित्यर्थः।। असद्रूपश्चेत् वन्ध्यापुत्रादिवदनुपलभ्येत।। सदसदात्मकत्वन्तु विरुध्दम्।। अतोऽनिर्वचनीय इत्युच्यते ।। शुक्तिरजतस्थले भ्रान्तिदृष्टया दृश्यमानं शुक्तिरजतं शुक्तिज्ञानेन बाध्यं भवति शुक्तिज्ञानाभाव दशायां भासते च।। अतः सद्रूपं न भवति, असद्रूपं न भवति सदसद्रूपञ्च न भवतीत्यनिर्वचनीयमेव।। अत्र प्रधानतया ख्यातिपञ्चकं तान्त्रिकैरभ्युपगम्यते।।

तथाहिः

"आत्मख्यातिरसत्ख्यातिः
अख्याति ख्यातिरन्यथा
तथाऽनिर्वचनख्याति
रित्येवं ख्यातिपञ्चकम्" इति ख्यातयः

"योगाचारो माध्यमिकः
तथा मीमांसकोऽपि च
नैयायिकोऽद्वैतिनश्च
ख्यातीरेताः क्रमाज्जगुः" इति तत्प्रवक्तारश्च ।।

अत्र प्रथमतः "तं केचिदन्यत्रान्यधर्माध्यास इति वदन्ति" इति अन्यथाख्यातिवादिनां आत्मख्यातिवादिनाञ्च मतं भगवत्पादैः प्रदर्शितम्।। ख्यातिर्नाम प्रतीतिः ।। अन्यथाख्यातिर्नामान्यस्यान्यरूपेण प्रतीतिः।।

अत्र केचित् – अन्यथाख्यातिवादिनः

'अन्यत्र – शुक्त्यादौ

अन्यधर्मस्य – स्वावयवधर्मस्य देशान्तरस्थरूप्यादेः अध्यासः इति वदन्तीति रत्नप्रभाविवरणम् [14] अन्यथाख्यातिवादिनां तार्किकानां भाट्टमीमांसकानाञ्चायमाशयः यत् शुक्त्यादेः नैगनिग्येन कारणेन देशान्तरस्थरजतस्य शुक्तौ रजताकारेण प्रतीयमानत्वादन्यथाख्यातिः ।।

ततो भगवत्पादैः "तं केचिदन्यत्रान्यधर्माध्यासः" इत्यनेनैव वाक्येन आत्मख्याति वादिनामपि मतं प्रदर्शितम्।। अत्र रत्नप्रभा

अन्यत्र = बाहये शुक्त्यादौ

अन्यधर्मस्य = बुध्दिरूपात्मनः धर्मस्य रजतस्य

अध्यासः = अवभासः इति [15]

बौध्दैकदेशिनो योगाचाराः आलयविज्ञानस्यात्मनः एव ख्यातिः रजतादिरूपेण प्रतीतिरिति वदन्ति।। तथा च बाहये शुक्तिशकले बुध्दिरूपात्मनो धर्मस्य रजतस्याध्यासः अर्थात् आन्तरस्य रजतस्य बहिर्वदवभासः इति वदन्ति।। अत्र आत्मनः बुध्देः ख्यातिः विषयरूपेण प्रतिभासः इति ते आत्मख्यातिवादिनः।।

प्राभाकरगुरुमतावलम्बिनो मीमांसकाः विभ्रमज्ञानमनङ्गीकृत्याख्याति वादमातिष्ठन्ते ।. तेषाञ्च मतं "केचित् यत्र यदध्यासः तद्विवेकाग्रहनिबन्धनो भ्रम" इति भगवत्पादैरनूदितम् ।।

अत्र रत्नप्रभाकाराः

यत्र यदध्यासो लोकसिध्दः तयोस्तध्दियोश्च भेदाग्रहे सति तन्मूलो भ्रमः इदं रूप्यमिति विशिष्टव्यवहारः इति ।। [16]

प्राभाकराणामयमाशयः यत् कुत्रापि भ्रान्तिः नास्त्येव।। सर्वविज्ञानं यथार्थमेव।। ऽवमेव शुक्ताविदं रजतम् इत्यत्रापि भ्रान्तिर्नास्त्येव।। तत्र ज्ञानद्वयमङ्गीक्रियते।।इदमित्याकारकमनुभवात्मकज्ञानमेकं, रजतमित्याकारकं स्मरणात्मकं ज्ञानमपरम्।। किन्तु तत्र इदमाकाररजताकारज्ञानयोः भेदज्ञानाभावेन रजतार्थी तत्र प्रवर्तते इति तेषां मतं प्रदर्शितं भगवत्पादैः।।

शून्यवादिनो बौद्धा असत्ख्यातिवादमभ्युपगच्छन्ति॥

असत. शून्यतातत्वस्यैव ख्याति रजताद्यात्मना प्रतीति रसत्ख्याति ॥

भाष्ये "अन्ये तु यत्र यदध्यास. तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते" इति तेषां मत प्रदर्शित भगवत्पादै ॥ अत्र रत्नप्रभाकारा ॥

रत्नप्रभाकाराः ॥

अन्ये = शून्यवादिनो बौध्दा· तस्यैव = अधिष्ठानस्य शुक्त्यादेः
विपरीत = विरूध्द·धर्मो यस्य तद्भाव·

तस्य धर्मत्वकल्पनां = रजतादेरत्यन्तासत कल्पनामाचक्षन्ते [17] इति॥

बुध्दशिष्यास्तु चत्वारः वैभाषिकाः योगाचारा· सौत्रान्तिकाः माध्यमिकाश्चेति ॥ तेषु वैभाषिकाना मते बाहयं वस्तु सत् तत्प्रत्यक्षम् ॥ सौत्रान्तिकाना मते बाहय वस्तु सदपि न प्रत्यक्षम्॥ योगाचाराणा मते विज्ञानस्यैव सत्व तदतिरिक्तस्य सर्वस्यासत्वम्॥ तथाच त्रयाणामपि मते विज्ञानधर्मस्य रजतस्य शुक्तिकाया समारोप· इति त्रयस्ते आत्मख्यातिवादिन एव॥ शुन्यवादी माध्यमिकस्तु शून्यतातत्वमेव सर्वं शून्यतातत्वमेव सदिव भासते इत्यभ्युपगच्छति॥ अत्र शून्यतातत्वस्यैव रजताकारेण प्रतीयमानत्वात् इयमसत्ख्याति॥

ऽावञ्च भगवत्पादैः "स्मृतिरुप· परत्र पूर्वदृष्टावभास·" इति अध्यासलक्षणकथनानन्तर तं केचिदन्यत्रान्यधर्माध्यास इति वदन्ति" इत्यादिवाक्यै· तार्किकादीना मतान्युपन्यस्य "सर्वथाऽपि तु अन्यत्र अन्यधर्मावभासता न व्यभिचरतीति" तेषा परस्परविरूध्दनाम्ना व्यावहारेऽपि अन्यत्रान्यधर्मावभासित्वमर्थात् एकस्मिन् वस्तुनि अपरवस्तुनः तादात्म्यज्ञानं सर्वत्र समानमेवेति अतोऽत्र विवादस्तु निष्प्रयोजन इति चोक्त·॥ अत्र रत्नप्रभाकाराणामप्ययमेवाशय·॥ तथाच "स्मृतिरूप· परत्र पूर्वदृष्टावभास·" इति अध्यासलक्षणं सोपपत्तिक शास्त्रसम्मतञ्च॥ अतोऽनिर्वचनीयख्यातिरेवा वश्यमादरणीया भवति। अत्र रत्नप्रभाकारैरपि भाष्यव्याख्यानावसरे पूर्वपूर्वसिध्दान्ताना दोषप्रदर्शनेन अनिर्वचनीयख्यातिरेव समर्थिता ॥ तथाहि – शुक्तावपरोक्षस्य रजतस्य बुध्दौ सत्वायोगात्, अपरोक्षस्य रजतस्य शुक्तौ सत्वे बाधायोगात् शून्यत्वे प्रत्यक्षत्वायोगान्मिथ्यात्वमेवेति॥ [18]

ऽातावतपर्यन्तं लक्षणपरभाष्यं प्रपञ्चितम् ॥ इदानीं

सम्भावनापरभाष्यमारभ्यते।। अत्र पूर्वपक्षी आत्मन्यनात्माध्यास· न सम्भवतीत्याक्षेपं प्रकटयति।। तत्र पूर्वपक्षिण. अभिप्रायः कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतध्दर्माणाम्" इत्यादिवाक्यैः प्रदर्शितः भगवत्पादै ।। तत्राक्षेपसाराशस्तावदयम्।।

यथाकथञ्चित् ज्ञानविषयीभूते वस्तुनि अन्यवस्तुभ्रान्तिर्भवति।। शुक्तित्वेनाज्ञातेऽपि इदन्त्वेन ज्ञाते शुक्तिशकले रजताध्यासः सम्भवति।। किन्तु अध्यासाधिष्ठानस्यात्मनः "न चक्षुषा गृहयते" (मु.उ.3.1.8) इत्यादि श्रुतिमनुसृत्य अविषयत्वात् कथमध्यास. इति।।

अत्र सिध्दान्ते भगवत्पादैः

"न तावदयमेकान्तेनाविषय. अस्मत्प्रत्ययविषयत्वात् अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धे."इत्यादि वाक्यै आत्मनः विषयत्वमपरोक्षत्वञ्च प्रदर्शितम्।। तत्रात्मनः विषयत्वमेव प्रकारेण समर्थित रत्नप्रभाकारैः।। तथाहि– विषयत्वं द्विविधम्।। भानभिन्नत्वे सति भानप्रयुक्तसंशयनिवृत्यादिफलभाक्त्वरूप विषयत्वमेक, भानभिन्नत्वरहित भानप्रयुक्तसशयनिवृत्त्यादिफलभाक्त्वरूपं विषयत्वमपरम्।।अनयोर्व्दयोर्विषयत्वयोर्मध्ये भानभिन्नत्वघटितविषयत्वस्य आत्मन्यसभवेऽपि भानभिन्नत्वरहित भानप्रयुक्तसशय निवृत्यादि फलभाक्त्वरूप द्वितीय विषयत्वमात्मनि सम्भवत्येवेति समर्थितम्।। अत्र भानं नाम चैतन्यम्। तदिभन्नत्वमर्थात् चैतन्य भिन्नत्वं चैतन्ये नास्तीति भानभिन्नत्वघटितं विषयत्व आत्मनि न सम्भवति।। भानप्रयुक्तसंशयनिवृत्यादि फलभाक्त्वन्तु सम्भवत्येव।। तत्र भानं नाम वृत्ति·।। वृत्तिप्रयुक्तावरणभङ्गश्रयत्वमात्मन्यस्त्येवेति आत्मनोऽपि विषयत्वं समर्थितम्।। अपि च आबालपण्डितमात्मनः संशयादि शून्यत्वेन तस्य स्वप्रकाशत्वं प्रसिध्दमिति आत्मानः अपरोक्षत्व साधयन्ति भगवत्पादा·।।

किञ्च भाष्यकारैरेव "न चायमस्ति नियम पुरोऽवस्तित एव विषये विषयान्तरमध्यसितव्यम् " इति वाक्येन, "अप्रत्यक्षेऽपि ह्याकाशे बालाः तलमलिनताद्यध्यस्यन्तीति" दृष्टान्तप्रदर्शनेन च " यत्र यत्र

अपरोक्षाध्यासाधिष्ठानत्वं तत्र तत्र इन्द्रियसंयुक्तत्वञ्चे"ति नियमस्य भङ्गो प्रतिष्ठापितः।। अत्र व्याख्याने रत्नप्रभाकारैरेवं विवृतम्।।
"अप्रत्यक्षेऽपि – इन्द्रियाग्राहयत्वेऽपि, बालाः – अविवेकिनः, तलमिन्द्रनीलकटाहकल्पं नभो मलिनं पीतमित्येवापरोक्ष – मध्यस्यंति" इत्यादि।। [19] तथाहि –

'नीलं नभः' इति सार्वजनीनो भ्रमः।। नभस्याकाशे नैल्यं नास्त्येव।। कटाहाकारत्वमपि नास्त्येव।।परन्तु 'नीलं नभ': इति सर्वेषामनुभवसिध्दः।। अतः अपरोक्षनैल्याध्यासाधिष्ठानत्वं नभस्यवश्यमङ्गीकरणीयमेव।। तत्र व्यापकस्य प्रत्यक्षविषयत्वस्य अभावेऽपि अपरोक्षाध्यासदर्शनात् नाऽयं नियमः प्रमाणिकः अतः इन्द्रियाग्राह्यत्वेऽपि अपरोक्षाध्यासः निष्प्रत्यूहः इति सुष्ठु प्रतिपादितं रत्नप्रभायाम्।।

सर्वेष्वप्यध्यासेषु अविद्यायाः कारणत्वं सम्भाव्यते।। तथा चाध्यासः कार्यरूपः, अविद्या कारणरूपा च ।। उक्तं भगवत्पादैः तमेतमेवं लक्षणमध्यासं पंडिताः अविद्येति मन्यन्ते इति।। अत्र पण्डिताः इत्यनेन पतञ्जलि प्रभृतयोऽभिप्रेताः।। तथाहि पातञ्जलं सूत्रम्।। 'अनित्याऽशुचिदुःखाऽनात्मसु नित्यशुचिसुखात्माख्यातिरविधा" 20 इति भाष्यव्याख्यानावसरेऽध्यासं अविद्याकार्यत्वादविद्येति मन्यन्ते इति अध्यासाविद्ययोः कार्यकारणत्वमुक्तं रत्नप्रभाकारैः।। भगवत्पादैस्तु 'युष्मदस्मत्प्रत्ययगोचरयोः"इत्यादिना कार्याध्यासमाक्षिप्य, सामग्रीसत्वादनुभवसत्वाच्च, "तथापी"त्यादि .... "अहमिदं ममेदमिति लोकव्यवहारः" इत्यन्तेन कार्याध्यास एव प्रदर्शितः।। अविद्या नाम सत्वरजस्तमोगुणोपेता आवरणविक्षेपशक्तियुक्ता प्रकृतिः।। तादृशाविद्यैव कारणाध्यास इत्युच्यते।। "इदं रजतम्" इत्यत्र मूलाविद्यापरतन्त्रतूलाविद्या रजताकारेण रजतज्ञानाकारेण च परिणमते यदि शुक्तिरजतादीनां अविद्यापरिणामित्वमङ्गीकुर्वन्ति।। घटपटादिप्रपञ्चस्य तु साक्षन्मूलाविद्यापरिणामित्व मङ्गीकुर्वन्ति।। अत एव मूलाविद्यायाः परिणाम्युपादानत्वं ब्रह्मणस्तु विवर्तोपादानत्वमिति वेदान्तिनामाशयः।।

तत्वतोऽन्यथाभावः परिणामः, यथा क्षीरस्य दधिरूपेण परिणामः।। अतत्वतोऽन्यथाभावः विवर्तः, यथा रज्जोः सर्पाकारेण प्रतिभासः।। सर्वस्याप्यविद्यापरिणामित्वादेव सुषुप्त्यवस्थायामविद्यायां लयः, प्रबोधे च पुनः ततऽआविर्भाव इति वेदान्तिनामाशयः।। अत्र कारणाध्यासमनुक्त्वा केवलकार्याध्यासप्रदर्शने को हेतुरिति चेदुच्यते।। जीवस्य कार्याध्यासः, अत्यन्तदुःखहेतुर्भवति।। यदा कार्याध्यासो वर्तते तदैव जीवः बध्दो भवति दुःखञ्चानुभवति।। यदा कार्याध्यासो निवर्तते तदा दुःखं नाऽनुभवति।। यथा गाढसुषुप्तौ न किञ्चिदवेदिषमिति अनुभवसिध्द मूलाज्ञानरूपकारणाध्यासोऽस्त्येव।। कार्याध्यासस्तु लेशोऽपि नास्त्येव।। अतः सर्वोऽपि जन्तुः सुखमनुभवति आनन्दमयकोशेऽस्तीति परमार्थः।। अतः दुःखहेतु कार्याध्यास ऽएव भगवत्पादैः प्रदर्शितः।। तदुक्तं रत्नप्रभायाम् "मूलाविद्यायाः सुषुप्तावनर्थत्वादर्शनात् कार्यात्मना तस्याः अनर्थत्वज्ञापनार्थं तद्वर्णनमिति भावः"इत्यादि।।[21] कार्याध्यासस्याविर्भावतिरोभावाभ्यां मूलाज्ञानं परिणाम्युपादानं स्पष्टमवगम्यते।। तत्र "मायां तु प्रकृतिं विद्यात् मायिनन्तु महेश्वरम्" (श्वेता।उ.4.10) इति वचनानुसारेण मायायाः प्रकृतित्वं गम्यते।। सांख्याः अपि वेदान्त्यभिमतां मायामेव प्रधानमिति वदन्तः जगत्कारणत्वं प्रधानस्याभ्युपगच्छन्ति।। प्रधानस्य जगत्कारणत्वं नाम जगत्परिणामित्वमेव।। प्रधानं महदहङ्काराद्यात्मना परिणमते इति।। ऽएवमद्वैतिनोऽपि माया जगदादि वियदाकारेण परिणमते इति वदन्ति।। तथाच प्रधानमाययोः को भेदः इत्यवश्यं प्रष्टव्यम्।। तत्रेदं समाधानम्।। सांख्यास्तु ईश्वरं नाऽङ्गीकुर्वन्ति।। विवर्तवादं नाऽङ्गीकुर्वन्ति ।। प्रधानं स्वतन्त्रमेव जगत्परिणामि नेश्वरपरतन्त्रम्।। अद्वैतिनस्तु माया ईश्वरपरतन्त्रा सती जगदाकारेण परिणमते इति वदन्ति।। अतो माया न स्वतन्त्रा तेषां मते।। माया यद्यप्यनादी ब्रहमज्ञानबाध्यत्वात्सान्तैव।। सांख्याभिमतं प्रधानन्तु अनाद्यनन्तञ्च।। सांख्यमते परिणामस्सर्वोऽपि सत्य ऽएव।। अतः कारणस्य कार्यस्य चोभयोस्सत्यत्वं स्वीक्रियते तेषां मते।। अद्वैतमते परमात्मनः विवर्ताधिष्ठानत्वसम्पादनाय

मायारूपाविद्यायाः परिणाम्युपादानत्वं स्वीकृतम् ।। किन्तु तेषां परिणामवादे तात्पर्यं नास्ति विवर्तवादे एव तात्पर्यम्।। अतोऽविद्या तत्कार्यञ्च सर्वं ब्रह्मविवर्तमेव।। ब्रह्मैवाविद्यात्मना तत्कार्यात्मना च भासते इत्यर्थः।। आरोपितस्याधिष्ठान सत्तातिरिक्तसत्ताकत्वाभावात् अनाद्यारोपस्य जीवत्वेश्वरत्व अविद्यामायासम्बन्धभेदानामनाद्यारोपाणां, कर्तृत्वभोक्तृत्व वियदादि प्रपञ्चाध्यासस्य च आरोपितत्वस्य च समानत्वात् ब्रह्मसत्तातिरिक्तसत्ताकत्वाभाव ऽव।। ब्रह्मव्यतिरेकेण नास्तीत्यर्थः।। मायायाः परतन्त्रत्वसूचनार्थं " मायिनन्तु महेश्वरम्" इत्युक्तं श्रुतौ।। अन्यथा सांख्याभिमतप्रधानस्यैव स्वातन्त्र्यं प्रसज्येत।। ऐन्द्रजालिकाऽविद्या न स्वतन्त्रासती तत्तद्वस्तुरूपेण भासते।। ऐन्द्रजालिकसङ्कल्पसचिवा सती तत्तद्वस्त्वात्मना भासते।। तथा मायापीत्यलमतिविस्तरेण।।

सर्वेष्वप्यध्यासेषु अज्ञानमेव मूलमिति वक्तव्यम्।। एव सर्वेऽध्यासाः अनात्माधिष्ठानकाध्यासा एव।। आत्माधिष्ठानकाध्यासस्तु स्वप्नाध्यासः।। तथा प्रपञ्चाध्यास स्सर्वोऽपि आत्माधिष्ठानक एव।। तत्राध्यासो द्विविधः प्रातिभासिको व्यावहारिकश्चेति।। प्रातिभासिकाध्यासस्तु शुक्तिरजताध्यासः रज्जुसर्पाध्यासश्च।। प्रातिभासिकत्वं नाम प्रतिभासासमयवर्तित्वम्।। यावद्रजताकारवृत्तित्वं तावदेव रजतस्य स्थितिरित्यर्थः।। अत एव तत्प्रातिभासिकमित्युच्यते।। प्रतिभासिकत्वस्यान्यं लक्षणमस्ति।। ब्रह्मज्ञानेतरबाध्यत्वं प्रातिभासिकत्वमिति।। ब्रह्मज्ञानेतरेण शुक्तिज्ञानेन रजतं बाध्यते रज्जवाध्यातो निवर्तते इत्यर्थः।। एवं ब्रह्मज्ञानेतरेण प्रबोधेनस्वप्नाध्यासो निवर्तते।।एवमेव ब्रह्मज्ञानेतरेण रज्जुज्ञानेन सर्पाध्यासो निवर्तते च।।

आगन्तुकदोषजन्यत्वं प्रातिभासिकमित्यप्याचक्षते।। आगन्तुकदोषो नाम "अनादिमूलाज्ञानभिन्नदोषः" इत्युच्यते।। स च काचादिदोषः।। नेत्रगतकाचादिदोषवशाच्छुक्तौ रजतादिभ्रमो जायते।। आगन्तुकनिद्रादोषवशात् आत्मनि स्वप्नाध्यासो जायते।। एवं प्रातिभासिकाध्यासो विवक्षणीयो भवति।।

व्यावहारिकाध्यासो नाम मूलाज्ञानजन्योऽध्यासः।। व्यावहारिकत्वं नाम ब्रह्मज्ञानमात्रबाध्यत्वम्।। व्यावहारिकप्रपञ्चभ्रमस्तु ब्रह्मज्ञानेतेरेण केनचन नैव निवर्तते।।किन्तु ब्रह्मज्ञानेनैव निवर्तते।।अतः ब्रह्मज्ञानमात्रबाध्यत्वं व्यावहारिकत्वमित्युपपन्नं भवति।।अनादिदोषजन्यत्वमपि लव्यावहारिकत्व प्रयोजनम्।। व्यावहारिकाध्यासे मूलाविद्यैव दोषत्वेन हेतुः।। अतः अनादिदोषजन्यत्वं प्रपञ्चाध्यासे उपपन्नं भवति।। ऽतादृशाऽनुभःवमनुसृत्यैव सत्यत्वं त्रिविधमित्युक्तम्।।

प्रतिभासिकसत्यत्वम्

व्यावहारिकसत्यत्वम्

पारमार्थिकसत्यत्वम्

अत्र पारमार्थिकसत्यत्वं ब्रहमणः व्यावहारिसत्यत्वं व्यावहारिक प्रपञ्चस्य प्रतिभासिकसत्यत्वं शुक्तिरजतस्वप्नादीनाम् इति सत्तात्रैविध्यपक्षमाश्रित्य व्यवस्था कृता अद्वैते कैश्चित्।। अत्रेयमाशंका।। तथाहि —

अध्यासो नाम भ्रमः।। भ्रमस्तु ऽाकवस्तुनि अन्यवस्त्वात्मना ग्रहणमित्युक्तम्।। तच्च ग्रहणन्तु भ्रान्तस्य पुरुषस्य मनोवृत्तिरूपमिति वक्तव्यम्।।यदा भ्रान्तः पुरुषः एकं व्यवस्त्वन्यवस्त्वात्मना गृहणाति, तादृशं ग्रहणमेव भ्रम इत्युच्यते।। तादृश भ्रमविषयीभूतं वस्तु भ्रान्तस्य मनोवृत्तिर्यावत्पर्यन्यं तावत्पर्यन्तमेवेति वक्तव्यःम्।।वृत्तिविगमकालावच्छेदेन अर्थात् वृत्तिनाशानन्तरं वृत्तिविषयीभूतं वस्तु अस्तीतिकथनं निर्युक्तिकमेव।। यथा शुक्तौ रजतमिति भ्रान्तिमतः पुरुषस्य रजताकारवृत्तिर्निवर्तते तदा रजतमपि निवर्तते एव।।तत्रैव यदि रङ्गाकारवृत्तिर्जायते तदा रजताकारवृत्तिः निवर्तते रजतमपि निवर्तते इति वक्तव्यं रजतस्य रजतवृत्तिसमकालत्वात्।। एवं स्वप्नाध्यासस्थलेऽपि यावत्स्वप्नपदार्थविषयकवृत्ति. सुप्तपुरुषस्य वर्तते तावदेव स्वाप्निकपदार्थास्सन्तीति वक्तव्यम्।। एवञ्चात्मनि प्रपञ्चाध्यायस्यापि भ्रान्तपुरुषस्य मनोवृत्तिरेव मूलमिति वक्तव्यम्।। यदा तु भ्रान्तपुरुषस्य जगदाकारवृत्तिर्निवर्तते तदा जगदपि निवर्तते युक्तेस्तुल्यत्वात्।।प्रपञ्चविषयक

वृत्तिनाशानन्तरं प्रपञ्चोऽस्तीति युक्तिर्निर्युक्तिका।। तथा च केषाञ्चित्पदार्थानां व्यावहारिकत्वं स्थायित्वमिति केषाञ्चित्पदार्थानां प्रातिभासिकत्वं स्थायित्वमिति च व्यवस्था कथं स्वीकर्तुं शक्यते इत्याशंका।। अत्रेदं समाधानम्।। सत्यमेव।। उत्तमाधिकारिणान्तु ऽतत्सर्वं प्रातिभासिकमिति दृष्टिसृष्टिमनुसृत्य कथ्यमाने जगन्मिथ्यात्वबोधकं ब्रहमप्रबोधं भवति।। ततः जगन्मिथ्यात्वनिश्चयप्रबोधकोऽद्वैतनिश्चयो भवति।। केचन मन्दाधिकारिणोऽपि वर्तन्ते।। तेषान्तु सर्वं प्रातिभासिकमित्युच्यमाने सहसा विश्वासो न भवतीति (अध्यारोप) सत्तात्रैविध्यपक्षः आश्रितः नतु सत्तात्रैविध्ये तात्पर्यम्।।

भगवत्पादानामपि व्यावहारिकाध्यासप्रतिपत्तये सम्प्रतिपन्नशुक्तिरजताध्यास प्रदर्शनमपि ऽतदभिप्रायमूलकमेवेदि वक्तुं शक्यते।। तत्र शुक्तिज्ञाने रजताध्यासनिवृत्तिः द्विधा निवृत्तिरूपा बाधरूपा चेति।। निवृत्तिस्तु सत्युपादाने कार्यस्य नाशः यथा मुद्गरनिपातेन घटस्य नाशः मृच्छकलानां सत्वेऽपि घटस्य नष्टत्वात् ।। ऽतादृश नाशः निवृत्तिः इत्युच्यते।। शुक्तिज्ञाने जाते रजताध्यासमूलभूत शुक्त्यवच्छिन्नचैतन्यावरकमूलाज्ञानस्य नष्टत्वात्।। तत्रैव यदि रङ्गज्ञानं जायते तदापि रजताध्यासो निवर्तते एव।। तदा उपादानस्यानष्टत्वात् शुक्तिज्ञानस्य नष्टत्वात् निवृत्तिरूप नाश ऽएवेति भवति।। मूलाज्ञानाशश्च ब्रहमसाक्षात्कारे एव भवति।। ज्ञानाऽज्ञानयोः बाध्यबाधकभावे समानविषयकत्वस्य प्रयोजकत्वात्।। ब्रहमविषयकाऽज्ञानं ब्रहमविषयकसक्षात्कारेणैव निवर्तते नाऽन्येन।। यथा शुक्तिं न जानामीत्यनुभूयमानं अज्ञानं शुक्तिज्ञानेनैव निवर्तते नाऽन्येन।।

अत्राध्यासः परोक्षोवा अपरोक्षो वा इति मुख्यं विवेचनीयम्।। यदि रजताध्यासः अपरोक्षो भवति शुक्तिविषयकापरोक्षज्ञानेनैव तस्य निवृत्तिः नाऽन्येन ।। यथा – रज्ज्वां सर्पभ्रमवतः पुरुषस्य "अयं सर्पः" इति ज्ञानेन धावतः "नाऽयं सर्पः किन्तु रज्जुरेव" इति उच्यमानेऽपि तादृशभ्रान्तिः सर्वात्मना न निवर्तते भयकम्पादिकञ्च न निवर्तते।। रज्जुं हस्तेन गृहीत्वा अन्यः कश्चिद्दर्शयति "रज्जुरेवेयं नाऽयं सर्पः" इति तदा निश्शेषं भ्रान्तिर्निवर्तते भयकम्पादिकञ्च निवर्तते।। तथा च अपरोक्षभ्रमनिवर्तकत्वं परोक्षज्ञानस्य

न सम्भवति।। अपरोक्षज्ञानस्यैवापरोक्षभ्रमनिवर्तकत्वमिति वक्तव्यम्।। तथाच अपरोक्षब्रह्मसाक्षात्कारस्यैव जीवत्वेश्वरत्व जगद्विषयकभ्रमनिवर्तकत्वं, न परोक्षज्ञानस्य इत्यायातम्।।

अत्रैवमाशंका।।

यत् ज्ञानं वर्तते तदज्ञाननिवर्तकमेव।। ज्ञानस्य अज्ञानानिवर्तकत्वे तस्य ज्ञानत्वमेव न संभवति।। यथा दीपस्यान्धकारानिवर्तकत्वे प्रकाशत्वमेव न सम्भवति तद्वत् ।। यथाच परोक्षज्ञानस्य अध्यास मूलभूताज्ञाननिवर्तकत्वं न सम्भवतीति कथं वक्तुं शक्यते।। यदि परोक्षज्ञानस्य अज्ञाननिवर्तकत्वं सम्भवति तर्हि तत एव बन्धनिवृत्तिसम्भवेऽपरोक्षज्ञानस्य वैय्यर्थ्यञ्च स्यात्।। अतः तत्र कथं समर्थनीयमित्याशंकायामुच्यते।।

अज्ञानं द्विविधम्।। असत्वावरण प्रधानमभानावरणप्रधानञ्च।। परोक्षज्ञानेनाऽसत्वावरणप्रधानमज्ञानं निवर्तते।। अभानावरणप्रधानमज्ञानन्तु यथाभूतं वर्तते एव।। यथा दूरे महापरिमाणे वृक्षे अल्पपरिमाणत्वभ्रान्तिः कस्यचिज्जाता।। ततः तादृशवृक्षसमीपादागतेन पुरुषेण "अयं वृक्षः अत्यधिकपरिमाणः नाऽल्पपरिमाणः भूशाखाशिंशुपादि सहितः इत्युक्ते अल्पप्रमाणभ्रान्तिमतः पुरुषस्य यदज्ञानमासीत् तच्चाज्ञानं अधिकपरिमाणोपदेशजन्यज्ञानेन नष्टं वा न वा? नष्टमेव।। किन्त्वत्रासत्वावरण मेव नष्टं ।। अभानावरणन्तु न नष्टम्।। अन्यैः शतधा उक्तमपि प्रत्यक्षं अल्पपरिमाणमेव दृश्यते नाऽधिकपरिमाणम्।। तत्कुत इत्युक्तौ अभानावरणस्य यथापूर्वं विद्यमानत्वात्।। तादृशाभानावरणस्य निवृत्तिस्तु वृक्षसमीपं गत्वा तादृशाधिकपरिमाणविशिष्टं वृक्षं यदा पश्यति तदा भवति।। तच्चज्ञानमपरोक्षज्ञानमेव।। तादृशापरोक्षज्ञानमेव अभानावरणस्य निवर्तकं भवति।। अतएव लोके वेदान्तश्रवणं क्रियमाणमपि ततः परोक्षज्ञानं जायमानमपि तत् नाऽपरोक्षाध्यासनिवर्तकं भवति।। तथाहि – वेदान्तश्रवणेन जीवत्वं पारमार्थिकं न भवति ब्रह्मैक्यरूपमेव जीवस्य पारमार्थिकं स्वरूप मिति ज्ञानं जातमेव।। तच्च ज्ञानं असत्वारणं निवर्तयति अभानावरण निवर्तकं न भवति।। यदा मनननिदिध्यासनादिभिरपरोक्षब्रह्म

साक्षात्कारो भवति तदैव मूलाज्ञाननिवृत्तिर्भवति।। अपरोक्षाध्यासोऽपि निवर्तते।। अतऽाव भगवत्पादैरुक्तं " श्रुतब्रहमणोऽपि यथापूर्वं संसारित्वभ्रान्ति"रिति।। [22]

ऽातावत्पर्यन्तमध्यासलक्षणं तत्सम्भावनाविषये पूर्वपक्षसिध्दान्तादिकञ्च प्रदर्शितम्।। इदानीं प्रमाणपरभाष्यमारभ्यते।। भगवत्पादाः अध्यासलक्षणं तत्सम्भावनाञ्च निरूप्य, लौकिकाः वैदिकाश्च सर्वे प्रमाणप्रमेयव्यवहारा अध्यासवशेनैवेति प्रतिपादयामासुः।।अत्र कथमविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च इति पूर्वपक्षे प्राप्ते, सिध्दान्ते भगवत्पादै प्रत्यक्षादीनामविद्यावद्विषयत्वं "देहेन्द्रियादिषु" इत्यादिवाक्यैः निरूपितम्।। तस्येदं रत्नप्रभाविवरणम् – तथाहि – मनुष्यादीनां देहे अहमित्यभिमान. तत इन्द्रियाणि ममत्वेन स्वीकृत्य " अहं द्रष्टा" "अहं श्रोता" "अहमनुमाता" इत्यादिरूपो व्यवहारः ।। इन्द्रियादिषु ममेत्यध्यासाभावे द्रष्टृत्वादि व्यवहार एव न सम्भवति।। इन्द्रियाणा मधिष्ठानं शरीरमेव।। "असङ्गोह्ययं पुरुष" (बृह.उ. 6.4.3.15) इत्यादिश्रुत्या आत्मनोऽसङ्गत्वात् देहात्मनोस्सम्बन्ध आध्यासिक एव।।

अत्र पूर्वपक्षी पुनरेवमाशंकते।।आत्मनः देहादिभिः आध्यासिकसम्बन्धो मास्तु स्वतश्चेतनतयाँ प्रमातृत्वोपपत्तेः, सुत्पतौ न प्रमातृत्वापत्ति करणोपरमादिति।। अत्र सिध्दान्ते उक्तं रत्नप्रभाकारैः।। अत्र प्रमा नाम का ? वृत्तिसम्बन्धरहितचिद्रूपा वा चित्सम्बन्धरहितवृत्तिर्वा, आहोस्विद्विशिष्टा वा इति।। प्रमा यदि नित्यचिन्मात्रं तर्ह्याश्रयत्वायोगः करणवैयर्थ्यञ्च।। यदि प्रमा केवल वृत्तिमात्रं तर्हि वृत्तेर्जडत्वात् जगदान्ध्यप्रसङ्गः।। अतः वृत्यभिव्यक्तो बोधः प्रमा इत्यवश्यमङ्गीकर्तव्यम्।। तच्च वृत्तिमन्मनस्तादात्म्यं विना असङ्गस्यात्मनः न सम्भवतीति तदर्थं देहाध्यासो तध्दर्माध्यासश्चावश्य मङ्गीकर्तव्याः।। अपि च आत्मानः प्रमातृत्वाभावे प्रमाणं न सिध्यतीति, अध्यासाभावेऽसङ्गस्यात्मनः प्रमातृत्वं नास्तीति, आत्मानः प्रमातृत्वादिव्यवहारार्थमध्यासोऽवश्यमङ्गीकर्तव्यः।।तस्मादविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि।।

अत्र पुनः इयमाशंका।। यत्राध्यासः तत्र व्यवहारः यत्राध्यासाभावः तत्रव्यवहाराभावः इति यदन्वयव्यतिरेकाभ्यां व्याप्तिरूच्यतेऽध्यासव्यवहारयोः तदसङ्गतम् कार्यविदुषामध्यासाभावेऽपि व्यवहारो दृश्यते एवेति।।

अत्र सिध्दान्ते उक्तं भगवत्पादैः "पश्वादिभिश्चाविशेषात्" इत्यादि।। विवेकिनोऽपि अध्यासवन्तः व्यवहारवत्वात् पश्वादिवदिति तस्यार्थः।। अत्र कार्यविदुषां अध्यासाभावेऽपि व्यवहारो दृश्यते एवेति वदतां पूर्वपक्षिणामाशयः एवं निराक्रियते रत्नप्रभाकारैः।। तथाहिः – किन्नाम विद्वत्वम्? ब्रह्मास्मीत्यात्म साक्षात्कारो वा अथवा यौक्तिकमात्रात्मभेदज्ञानं वा।। यदि विद्वत्वमात्म साक्षात्कारश्चेत् तर्हि बाधिताध्यासानुवृत्या व्यवहारस्तेषाम्।।तथाहिः– अपरोक्षज्ञानेनाभासीकृतोध्यासो बाधिताध्यासः।। तेषां अध्यासो न बन्धहेतुर्भवति।। परन्तु व्यवहारो अनिर्वार्य एवेति।। अत्र विशेषेणोक्तं पूर्णानन्दीये – तथाहिः– आवरणे निवृत्तेऽपि 'पीतःशंखः' इति वत् वासनात्माकविक्षेपशक्त्यंशानुवृत्तेः जीवन्मुक्तानां वासिष्ठादीनां व्यवहारोप्यध्यासजन्य एव।। परन्तु तदीयाध्यासस्य बाधितत्वात् न तत्कारणव्यवहारस्य बन्धहेतुत्वमिति।। [23]

यदि पुनः विद्वत्वं केवलं यौक्तिकात्मानात्मज्ञानञ्चेत् तर्हि परोक्षज्ञानस्यापरोक्षभ्रान्त्यनिवर्तकत्वात् विवेकिनामपि व्यवहारकाले पश्वादिभिरविशेषात् अध्यासवत्वेनोभयोस्तुल्यत्वात् व्यवहारोऽध्यासकार्य एव।। अत्र प्रवृत्तिविषये मनुष्याणां पश्वादिभ्योऽविशिष्टत्वं सदृष्टान्तं प्रदर्शयन्ति भगवत्पादाः।। तथाहि – पश्वादयः शब्दादिभिः श्रोत्रादीनां सम्बन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते अनुकूले च प्रवर्तन्ते।। यथा दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमय मिच्छतीति पलायितुमारभन्ते, हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति खड्गोद्यतकरान् बलवत उपलभ्य ततो निवर्तन्ते तद्विपरीतान् प्रति प्रवर्तन्ते।। अतः समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः।। तत्सामान्यदर्शनात् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समान इति निश्चीयते इत्यादि।। [24]

एवमेव लौकिकव्यवहार इव शास्त्रीयव्यवहारोऽपि आध्यासिक एव।।तथाहि – यद्यपि वैदिककर्मणः देहोऽहमिति अध्यासजन्यत्वाभावेऽपि

क्षुत्पिपासादिग्रस्तो जातिविशेषवानहम्" "अहं संसारी" इत्याद्यध्यासजन्यत्वमस्त्येव नो चेत्कर्मणि प्रवृत्यनुपपत्तेः।। आगमोऽपि "ब्राह्मणो यजेत" "न ह वै स्नात्वा भिक्षेत" "अष्टवर्षं ब्राह्मणमुपनयीत" "कृष्णकेशोऽग्नीनादधीत" इत्यादि ब्राह्मणादिपदैः अधिकारिणं वर्णाद्यभिमानिनमनुवदन् अध्यासं गमयत्येवेति भगवत्पादाभिप्रायस्य रत्नप्रभाविवरणम्।। तथाच सर्वे व्यवहाराः लौकिकाः एवेत्यवश्यमभ्युपगन्तव्यम्।। अथाध्यासः कस्य कुत्र इत्याशङ्काया मुच्यते भगवत्पादैः।।

तद्यथा पुत्रभार्यादिषु विकलेषु सकलेषु वा सत्सु अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यतीति अयं बाह्यधर्माध्यासः।।

एवं "स्थूलोऽहम्" इत्यादिषु देहगतस्थूलादिधर्मान् आत्मन्यध्यस्यतीति अयं देहधर्माध्यासः।।

तथा "मूकोऽहम्" इत्यादिषु इन्द्रियधर्मान् मूकत्वादीन् आत्मन्यध्यस्यतीत्यय मिन्द्रियधर्माध्यासः।। एवमेव "काम्यहम्" "सङ्कल्पवानहम्" इत्यादिषु कामाद्यन्तःकरणधर्मान्[25] आत्मन्यध्यस्यतीत्यय मन्तःकरणाध्यासः।।

एव महमित्यध्यासेऽपि आत्मनि बुध्याद्यध्यासात् कर्तृत्वादिलाभः, बुध्यादावात्माध्यासात् चैतन्यलाभःइतिपरस्पराध्यासेनैव व्यवहार इति रत्नप्रभाकाराः।।[26]

एवञ्चायमध्यासोऽनाद्यविद्यात्मकतया अनादिः।।अध्यासात् संस्कारः संस्कारादध्यासः इति प्रवाहतो नैसर्गिकत्वमस्याध्यासस्य।। ज्ञानं विना ध्वंसाभावादानन्त्यम्।। उक्तञ्च गीतायाम्—

"न रूपमस्येह तथोपलभ्यते नाऽन्तो न चादिर्न च सम्प्रतिष्ठा" (15.3) इत्यादि।। अस्याध्यासस्य मिथ्याज्ञानकल्पितत्वात् मिथ्याप्रत्ययरूपः।। यदा अध्यासः तदा व्यवहारः इति न्यायात् अयमध्यासः कर्तृत्वभोक्तृत्वप्रवर्तकः।। सर्वस्यापि प्रपञ्चस्य अध्यासात्मकत्वादयं सर्वलोकप्रत्यक्षः।।

एवञ्च अस्याध्यासस्याविद्याकल्पित कर्तृत्वभोक्तृत्वादिरूपबन्धहेतुत्वात्, बन्धस्य ब्रह्मात्मैकत्वविद्यानिवर्त्यत्वाच्च, अध्यासस्वरूपनिरूपणानन्तरं ब्रह्मस्वरूपप्रतिपादनाय जिज्ञासाधिकरणमारभ्यते भगवत्पादैः।।

# रत्नप्रभाविमर्शे चतुर्थोऽध्यायः

## जिज्ञासाधिकरणम्

जिज्ञासाशब्दघटितं जिज्ञासाप्रतिज्ञापरं वा अधिकरणं जिज्ञासाधिकरणम्।। भगवता बादरायणेन "अथातो ब्रह्मजिज्ञासा" इति सूत्रेण वेदान्तशास्त्रमारब्धम्।। साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्यः इति सूत्रस्यापाततोऽर्थः।। "तद्विजिज्ञासस्व" (तै. उ. 3. 1)
"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ. उ. 2.4.5.) इत्याद्याः सूत्रस्यास्य मूलभूताः श्रुतयः।। आत्मब्रह्मणोरैक्यन्तु "अयमात्मा ब्रह्म" (बृ. उ. 2.2.19) इत्यादिश्रुतिमूलकम्।।तथा चात्मज्ञानमेव ब्रह्मज्ञानं तदेवानर्थनिबर्हणम् 'ऋते ज्ञानान्न मुक्तिः' इति श्रुतेः।। अतः नित्यफलेच्छुना ब्रह्मजिज्ञासा कर्तव्या इत्यर्थः।।

अत्र जिज्ञासासूत्रमूलभूतश्रोतव्यश्रुतौ 'श्रोतव्य' इत्यत्र विधिरस्ति वा न वा विधिपक्षेऽपि स किं स्वरूपः इति विषये शास्त्रकाराणां भिन्नाभिप्रायाः वर्तन्ते इति तान् यथाशक्ति प्रदर्शयामः।।

श्रवणविधिनिरूपणम्

श्रोतव्यः इत्यत्र श्रुधातुः विध्यर्थको तव्यप्रत्ययः।। तथा च श्रोतव्य श्रुतौ आत्मदर्शनमुद्दिश्य श्रवणादिकं विधीयते।। श्रवणं नाम वेदान्तानामद्वितीये ब्रह्मणि तात्पर्यावधारणानुकूला मानसी क्रिया।। [1]

मीमांसकमते विधिस्त्रिविधः अपूर्वविधिः नियमविधिः परिसंख्याविधिश्चेति।। तदुक्तम्—

"विधिरत्यन्तमप्राप्तौ
नियमः— पाक्षिके सति
तत्र चान्यत्र च प्राप्तौ

परिसंख्येति गीयते" इति।। [2]

तत्र प्रकटार्थविवरणकाराः अनुभूतिस्वरूपाचार्या. "श्रोतव्य" इत्यत्र अपूर्वविधिं कलयन्ति।।

यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधि·।। यथा – यजेत स्वर्गकामः।। अत्र स्वर्गाय यागो विधीयते इत्यर्थः।। अत्र यागस्य स्वर्गार्थत्व न प्रमाणान्तरेण प्राप्तं किन्त्वनेनैवेति अयमपूर्वविधि.।। [3].

अत्र वेदान्ते "तं त्वौपनिषदं पुरुषं पृच्छामि" (बृ. उ. 3.9.26) "नाऽवेदविन्मनुते तं बृहन्तम्" (तै. ब्र. 3.12.9) इत्यादिभिः वेदैकवेद्यत्वं परब्रहमणः सिध्दम्।। अतो मानान्तरावेद्यत्वस्याऽपूर्वाख्यलिङ्गौचित्यबलाच्च श्रोतव्य इत्यत्र अपूर्वविधिरङ्गीकार्यः इति तेषां मतम्।।

श्रोतव्य इत्यत्र श्रवणविधिं परिसंख्याविधिरिति केचन मन्यन्ते।।

एकस्मिन् शेषिणि उभयोश्शेषयोः कर्तव्यत्वेन प्राप्तौ सत्या शेषान्तरस्य नाम एकस्य शेषस्य निवृत्तिफलको विधि· परिसख्याविधिः।। अथवा द्वयोः शेषिणोः एकस्य शेषस्य कर्तव्यत्वेन प्राप्तौ सत्यां शेष्यन्तरान्निवृत्तिफलकोविधिः परिसंख्याविधिः।।यथा – अग्निचयने "इमामगृभ्णन् रशनामृतस्य" इतिमन्त्रः (तै. स 5.1.2.1)।। अत्र गर्दभरशनाग्रहणं अश्वरशनाग्रहणं द्वयञ्चावश्यं कर्तव्यम्।। तत्र "इमामगृभ्णन् रशनामृतस्ये"तिमन्त्रः रशनाप्रकाशन सामर्थ्यरूपलिङ्गात् गर्दभरशनाग्रहणेऽश्वरशनाग्रहणे च पठितव्यत्वेन प्राप्नोति।। किन्तु "इत्यश्वाभिधानीमाधत्ते" इति विधिस्तु गर्दभरशनाग्रहणं निवर्तयति अर्थात् गर्दभरशनाकालेऽयंमन्त्रः न वक्तव्य इत्यर्थः।।

अयञ्चापूर्वविधिर्न भवति प्राप्तत्वात्।। नाऽपि नियमविधिः रशनाप्रकाशनसामर्थ्यलिङ्गवशात् उभयोरपि अश्वरशानागर्दभरशनाग्रहणयोर्मन्त्रस्य कर्तव्यत्वेन प्राप्तत्वात् अप्राप्तांशपरिपूरण फलासंभवाच्च।। परन्तु इतरनिवृत्तिफलकत्वेन परिसंख्याविधिरेव।।

अत्र वेदान्ते "तद्विज्ञानार्थं स गुरुमेवाऽभिगच्छेत् समित्पाणिः श्रोत्रियं

ब्रह्मनिष्ठम्" (मु. उ 1.2.12) इति श्रुतिबलेन ब्रह्मज्ञानार्थत्वेन श्रवणस्य प्राप्तत्वान्न तत्प्राप्तिफलकः।। तत्र अप्राप्तांशपरिपूरणस्यास्य फलाभावाच्च नाऽयमपूर्वविधिः नाऽपि नियमविधिः।। परन्तु ब्रह्मज्ञानार्थत्वेन भाषाप्रबन्धादीनां द्वैतशास्त्रस्य च साधनत्वेन प्राप्तौ तन्निवृत्तिफलकः— ।।

केचन श्रोतव्यः इत्यत्र नियमविधिमभ्युपगच्छन्ति।। यथा 'व्रीहीनवहन्ति' इत्यत्र तण्डुलनिष्पत्तिसाधनत्वेन नखविदलनस्यापि प्राप्तावपि अवहननस्यैव विधानात्, अवहननेनैव तण्डुलो निष्पातव्यः इत्यर्थो लभ्यते।। अत्रास्य विधेः नखविदलनेन निवृत्तिर्वा अप्राप्तांशपरिपूरणं वा फलमिति संशये अप्राप्तांशपरिपूरणस्य विधेयाऽवहनननिष्ठत्वेन नखविदलननिवृत्तेः अविधेयनखविदलनगतत्वेन च सन्निकृष्टत्वात् अप्राप्तांशपरिपूरणमेवास्य विधेः फलमिति तत्र सिध्दान्तः ।।

वेदान्ते — "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" (मु.उ. 3.1.2)

इत्यत्र अन्यमिति विद्यमानत्वात् भिन्नात्मज्ञानात् परमात्मा भिन्न इति ज्ञानादपि मुक्तिरिति भ्रमः संभवतीति भिन्नात्मशास्त्रस्य श्रवणेऽपि मुमुक्षोः प्रवृत्तिः सम्भवेत्।। अतः तत्परिपूरणांशनियमविधिरेव।। अद्वैतात्मपरवेदान्तविचारः एव कर्तव्यः अर्थात् तत्र इतरनिवृत्योः फलस्य संभवेन अप्राप्तांशपरिपूरणमेवास्य विधेः फलमित्याशयः।। अतः सर्वथा अद्वैतपरवेदान्तश्रवणेनैव ब्रह्मसाक्षात्कारस्सम्पाद्यः इति नियमविधिपक्षावलम्बिनां आशयः।।

किञ्च गुरुमुखाधीनवेदान्तश्रवणादिव प्रज्ञासम्पन्नस्य, स्वयमेव गुरुनैरपेक्ष्येण वेदान्तविचारसम्भवात् तादृशब्रह्मविचारादपि ब्रह्मज्ञानसम्भवेन गुरुमुखाधीन वेदान्तश्रवणप्रवृत्तिः पाक्षिकी स्यादित्याशंका स्यात् ततः वेदान्तश्रवणं विधीयते।। गुरुमुखाधीनवेदान्त श्रवणे क्रियमाणे नियमादृष्टं किञ्चिज्जायते।। तेन ज्ञानोत्पत्तिप्रतिबन्धक निवृत्तिर्भवति।। प्रतिबन्धके निवर्त्यमाने ज्ञानोत्पत्तिस्सुकरा ततश्च मुक्तिस्सुलभा।। प्रज्ञावतां गुरुनैरपेक्षेण क्रियमाणवेदान्तविचारात् सत्तानिश्चयरूपब्रह्मज्ञानसंभवेऽपि अविद्यानिवर्तक

ब्रह्मसाक्षात्कारोत्पत्तिप्रतिबन्धकदुरितविशेषनिवर्तकाभावात् तत्र प्रतिबध्दं परोक्षज्ञानकल्पमवतिष्ठते इति नियमविधिवादिनामभिप्रायः।।

अत्र यद्यपि "तद्विज्ञानार्थं स गुरुमेवाऽभिगच्छेत्" (मु. उ * 1.2.12) इत्युक्त्या गुरूपसदनविधिनैव गुरुरहितविचारनिवृत्तिसंभवात्, अर्थात् गुरुमुखत एव वेदान्तविचारः कर्तव्यः इत्यर्थलाभात् श्रोतव्यः इति नियमविधिर्व्यर्थः इत्याशंका न युक्ता।। गुरूपसदनस्य श्रवणाङ्गतया विधीयमानत्वेन श्रवणविध्यभावे गुरूपसदनविधिरेव न सम्भवतीति गुरूपसदनविधिना श्रवणविधेः न वैफल्यशंकावकाशः।।

अथवा अद्वैतात्मपराऽऽन्ध्रभाषामयगीर्वाण भाषामयग्रन्थश्रवणेऽपि ब्रह्मसाक्षात्कारसाधनत्वभ्रान्त्या प्रवृत्तिसंभवेन उपनिषद्वाक्यश्रवणे प्रवृत्तिः पाक्षिकी स्यादिति श्रोतव्यः इति नियमविधिः स्वीक्रियते।। ततः अद्वितीयात्मपरोपनिषद्वाक्यैनैव श्रवणं कर्तव्यं नाऽन्यभाषाप्रबन्धादिभिरिति लभ्यते।।

आत्मा श्रोतव्यः इति मननादिवत् आत्मविषयकत्वेन निबध्यमानं श्रवणं आगमाचार्योपदेशजन्यात्मविषयकज्ञानमेव न तात्पर्यविचाररूपम्।। तथाच श्रवणस्य ज्ञानरूपत्वेन कर्तव्यत्वासंभवात् तत्र न कोऽपि विधिरिति वाचस्पतिमिश्राः तदनुयायिनश्च।। अतऽव समन्वयाधिकरणे भाष्यकारैः आत्मज्ञाने विधिर्नास्तीति प्रतिपाद्य "किमर्थानि तर्हि आत्मा वाअरे द्रष्टव्यः इत्यादीनि विधिच्छायानि वचनानि", इत्याशंक्य "स्वाभाविकप्रवृत्ति विषयविमुखीकरणार्थानीति ब्रूमः" इति समाधितम् अतश्च भाष्यकाराणामपि विध्यभावपक्षः एव सम्मतः इति तेषामाशयः ।।

रत्नप्रभाकारैस्तु "श्रोतव्यः" इत्यत्र नियमविधिरेवाङ्गीकृतः । तथाहि – "स्वाध्यायोऽध्येतव्यः" (शतपथ.ब्रा.11.5.7.) इति नित्याध्ययनविधिनाऽधीतसाङ्गस्वाध्याये मुख्याधिकारिणि "सोऽन्वेष्टव्यः" (छा. उ 8.7.1) इत्यादि श्रवणविधिः स्पष्टमुपलभ्यते ।। तत्र मुमुक्षुणा अद्वैतात्मपरवेदान्तविचारः कर्तव्यः इत्यर्थो लभ्यते ।। अनेन नियमविधिना अर्थादेव भिन्नात्मशास्त्रप्रवृत्तिः वैदिकानां पुराणादिप्राधान्यं वा निरस्यते

इत्युक्तं रत्नप्रभायाम् ।। अतस्तेषां नियमविधावेव तात्पर्यमिति, अर्थादित्युक्तत्वादितर निवृत्तिरार्थिकफलमिति च ज्ञायते।। एवमेव तत्र रत्नप्रभाकारैः "येषां मते श्रवणे विधिर्नास्ति तेषामविहितश्रवणे ऽधिकार्यादिनिर्णया नपेक्षणात् सूत्रं व्यर्थमित्यापततीति दूषणप्रदर्शनेन विध्यभावः पक्षः तेषां सुतरामसम्मतः इति प्रतिभाति ।।

अत्र रत्नप्रभां व्याकुर्वता पूर्णानन्देन एवं विवृतम्।। तथाहि अमृतत्वकामेनाद्वैतात्मविचार एव वेदान्तवाक्यैः कर्तव्यः इति रत्नप्रभावाक्ये एवकारस्योभयत्रान्वयः।। तथाच अमृतत्वकामेन अद्वैतात्मविचार एव वेदान्तवाक्यैरेव कर्तव्यः इति।। एवञ्च वेदान्तवाक्यैरेव विचारः इत्यनेन स्त्रीशूद्रादीनां पुराणादिश्रवणेन परोक्षमेव ज्ञानं जायते।। तेन जन्मान्तरे वेदान्तश्रवणेऽधिकारः।। अद्वैतात्मविचार एवेत्यनेन द्वैतशास्त्रविचारो निरस्यते।।

वेदान्तवाक्यैरेवेत्यनेन वैदिकानां पुराणादिप्राधान्यं निरस्यते इति।।[5]

रत्नप्रभां व्याकुर्वता अच्युतकृष्णानन्देन — यद्यपि अधिकारिणः पुराणादीनां प्रधान्यं निरस्तं तथापि सर्वात्मना तेषां विचारव्यावृत्तिर्न कृता।।'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति न्यायेन वेदान्तार्थज्ञानदार्ढ्याय आत्मतत्वपरमोक्षधर्मभगवद्गीतादि विचारस्यावश्यकत्वादित्युक्तं तेन।।[6] स्यादेतत्।।

## अथशब्दार्थविचारः

अथ अतः ब्रह्मजिज्ञासा इति त्रिपदात्मकं सूत्रम्।। अत्राथ शब्दस्यानन्तर्यार्थकत्वनिरूपणेन ब्रह्मजिज्ञासायामधिकारी साधितः भाष्यकारैः।। वस्तुतो ह्यथशब्दः बहुष्वर्थेषु प्रयुज्यमानो दृश्यते।। तथाहि—
"मङ्गलानन्तरारम्भप्रश्नकात्स्न्येष्वथोऽथ" इति वचनात्[7]
"मङ्गलाद्यर्थेष्वथशब्दस्य प्रयोगो दृश्यते।। इति तद्यथा —
मङ्गले — अथ परस्मैपदानि

अनन्तरे – स्नातोऽथ भुंक्ते
आरम्भे – अथशब्दानुशासनम्
प्रश्ने – अथ शक्तोऽसि भोक्तुम्
कात्स्न्यें – अथ क्रतून् ब्रूमः इत्यादि।।

एवञ्चात्राथशब्दस्यानेकार्थकत्वे तस्य केवलमानन्तर्यार्थकत्वं कथमिति विचारणीयम्।। अत्रोच्यते – आनन्तर्ये प्रयुक्तोऽथशब्दः श्रवणमात्रेणैव 8 मङ्गलफलको भवति यथा अन्यार्थं नीयमानः उदकुम्भः दर्शनमात्रेणैव मङ्गलफलकः तद्वत् ।। अतो न पुनस्तदर्थोऽथशब्दः मङ्गलस्य ब्रह्मविचारकर्तव्यत्वरूपे वाक्यार्थे समन्वयाभावाच्च।।

एवमेवारम्भार्थेऽपि न अथ शब्दः।। सूत्रस्थ जिज्ञासापदमभिधया ज्ञानेच्छापरम्।। तथा च अथशब्दस्य आरंभार्थत्वे ब्रह्मज्ञानेच्छा आरभ्यते इत्यर्थः सिध्यति।। तदसङ्गत.।। इच्छायाः अनारभ्यत्वात्।। न हि प्रत्याधिकरणमिच्छा क्रियते किन्तु तया विचार. इति अभिधार्थे स्वीकृतेऽथशब्दस्य अधिकारार्थः न संभवति।। एवं लक्षणार्थेऽपि।। जिज्ञासापदस्य लक्षणया विचारोऽर्थः।। तथाहि – अत्र ज्ञाधातुः प्रकृतिः।। इच्छार्थकः सन् प्रत्ययः।। भाष्यकारैस्तु ब्रह्मजिज्ञासा कर्तव्या इति कर्तव्यपदमध्याहृतम्।।तथा चात्र प्रकृतिप्रत्यययोः ज्ञानेच्छयोः कर्तव्यपदेनान्वयः न सम्भवतीति प्रकृत्या ज्ञाधातुना फलीभूतं ज्ञानमजहल्लक्षणया उच्यते।। सन् प्रत्ययेन इच्छासाध्यो विचारः जहल्लक्षणया इति जिज्ञासापदस्य लक्षणया विचारोऽर्थः।। तच्च कर्तव्यपदाध्याहारं विना न सम्भवति।। भाष्यकारैः कर्तव्यपदेऽध्याहृते तेनैवारम्भार्थस्सिध्यतीति न पुनस्तदर्थको अथ शब्दः। एवमेव प्रश्नकात्स्न्याद्यर्थेष्वपि अथ शब्दः न भवति समन्वयाभावात्।। किन्तु अधिकारिसिध्यर्थमानन्तर्यार्थतैव युक्तेति भाष्यकाराभिप्रायं विस्तरेण प्रतिपादितवन्तः रत्नप्रभाकाराः।।

एतावता अथशब्दस्यानन्तर्यार्थकत्वं निश्चितम्।। अत्र कस्मादानन्तर्यमित्याशंकायां वेदाध्ययनं (स्वाध्याय) साधारण कारणत्वेनाऽभिप्रेतं भाष्यकारैः।। ततः ब्रह्मजिज्ञासायाः कर्मावबोधाऽनन्तर्ये

शंकिते कर्मब्रह्मणोः शेषशेषित्वाऽधिकृताऽधिकारित्वादि सम्बन्धनिरासेन, कर्मब्रह्मणोः फलजिज्ञास्यादिवैलक्षण्यप्रदर्शनेन च ब्रह्मजिज्ञासायाः कर्मावबोधानन्तर्यत्वं निराकृतं भगवत्पादैः।। ततः यदनन्तरं ब्रह्मजिज्ञासा उपदिश्यते तत्पुष्कलकारण वक्तव्यमिति प्राप्ते उक्तं भगवत्पादैः।।

तथाहि — " नित्यानित्यवस्तुविवेकः"

" इहामुत्रार्थभोगविरागः"

"शामदमादिसाधनसम्पत्"

"मुमुक्षुत्वं च इति।।

एते ब्रह्मज्ञानेच्छुः अर्हताः इति साधनचतुष्टयसम्पन्न एव ब्रह्मजिज्ञासायामाधिकारीति सिध्यति।।तथा च साधनचतुष्टयसम्पत्यनन्तरं ब्रह्मजिज्ञासा कर्तव्या इत्यर्थः सिध्यति।। एतेऽधिकारिगुणाः "तद्यथेह कर्मचितो लोकःक्षीयते" (छा. उ * 8. 1. 6) "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" (मु. उ * 1.2.12) "शान्तो दान्त उपरतस्तितिक्षुःसमाहितः श्रद्धावित्तो भूत्वा आत्मन्येवाऽऽत्मानं पश्येत्" (बृ. उ * 4. 4. 23) इत्यादि श्रुतिभिः प्रतिपाद्यन्ते।।

1. अत्र ब्रह्मैव नित्यं ततोऽन्यदनित्यमिति यो विवेकः सः नित्यानित्यवस्तुविवेकः।।

2. वैषयिकसुखानामैहिकानां तथैव पारलौकिकानां जन्यत्वादनित्यत्वाच्च तेषु वैराग्यमिहामुत्रार्थभोगविरागः।।

3. शमदमादिसाधनसम्पत्तिः।।

1. अत्र शमो नाम लौकिकव्यापारान्मनसः उपरमः।।

2. दमो नाम बाहयकरणानामुपरमः।।

3. ज्ञानार्थं विहितनित्यादिकर्मसन्यासः उपरतिः।। (अथवा) उपरतिस्सन्यासः।।

4. शीतोष्णादिद्वन्द्वसहनं तितिक्षा।। अत्रोक्तं विशेषेणभगवत्पादैः।। तथाहि —

"सहनं सर्वदुःखाना –
मप्रतीकार पूर्वकं
चिन्ताविलापरहितं
सा तितिक्षानिगद्यते" इति।। [9]

5. निद्रालस्यप्रमादत्यागेन मनःस्थितिः समाधानम्।।

6. श्रद्धा नाम सर्वत्रास्तिकता ।। अत्रोक्तं भगवत्पादैः ।।

तथाहिः "शास्त्रस्य गुरुवाक्यस्य
सत्यबुध्यवधारणात्
सा श्रध्दा कथिता सद्भिः
यथा वस्तूपलभ्यते" इति।। [10]

एतत् षटकप्राप्तिः शमदमादिसाधनसम्पत्तिः।। इदञ्च शमादिषट्कं "शान्तो दान्त उपरतस्तितिक्षुः समाहित. श्रध्दावित्तो भूत्वा आत्मन्येवाऽऽत्मानं पश्येत्" (बृ.उ * 4.4.23) इति माध्यान्दिनपाठानुसारि।। "समाहितो भूत्वा" इति काण्वपाठे श्रध्दावित्तपदं नास्तीति विज्ञेयम्।।

4. मुमुक्षुत्वं नाम मोक्षेच्छा।। तदुक्तं विस्तरेण भगवत्पादैः।।

तथाहिः "अहङ्कारादिदेहान्तान्
बन्धानज्ञानकल्पितान्
स्वस्वरूपावबोधेन
मोक्तुमिच्छा मुमुक्षुता" इति।। [11]

एवञ्च साधनचतुष्टयसम्पन्नः ब्रहमजिज्ञासायामधिकारी भवति।। अत्र साधनचतुष्टयप्राप्तिविषये पूर्वपूर्वस्योत्तरोत्तरहेतुत्वं प्रतिपादितं रत्नप्रभाकारैः।। उक्तञ्च – "अत्र विवेकादीनामुत्तरोत्तरहेतुत्वेनाधिकारि विशेषणत्वं मन्तव्यम्" इत्यादि।। [12] तथा च नित्यानित्यवस्तु विवेकादिहामुत्राथभोगविरागः सिध्यति।। ततः शमादिषट्क सम्पत्तिस्ततो मुमुक्षुत्वञ्चेति क्रमोऽत्र वेदितव्यः।। अत्र रत्नप्रभायामपरो विशेषः प्रदर्शितः।। तथाहि – अत्र विवेकादीनां सत्वे एव ब्रहमसाक्षात्कारः नोचेन्न।। उक्तञ्च – अथ कथंचित् कुतूहलितया

बहुश्रुतत्वबुध्या दैववशाद्वा ब्रहमविचारप्रवृत्तेस्सत्वेऽपि फलपर्यन्त तद् ज्ञानं नोदेतीति।। एवञ्चात्र साधनचतुष्टय सम्पत्तेरावश्यकता स्पष्टीकृता।। अत एव सकलशास्त्रपारङ्गतोऽपि नारदः सनत्कुमारमुपगम्य "सोऽहं भगवः शोचामि" इत्याद्युक्तवान्।।

सन्दर्भेऽस्मिन् विद्यारण्यश्रीचरणा :

"स पुराणान् पञ्च वेदान्
शास्त्राणि विविधानि च
ज्ञात्वाप्यनात्मवित्वेन
नारदोऽति शुशोच हि" [13] इति तद्विषयमुपवर्ण्य,
"वेदाभ्यासात्पुरा ताप
त्रयमात्रेण शोकिता
पश्चादभ्यासविस्मार
गर्वभङ्गैश्च शोकिता" [14] इत्यादि शोककारणमपि स्पष्टं प्रतिपादितवन्तः।।

अत्रेयमाशंका।। ननु आत्मज्ञानविहीनस्य सर्वमपि शास्त्रज्ञानं व्यर्थमेवेति चेन्न ।। शास्त्रज्ञानं न कदापि व्यर्थ भवति।। शास्त्रज्ञानेन ब्रहमणः परोक्षज्ञानं जायते।। तच्च पापक्षयकारि।। तदुक्तम् –

"परोक्षं ब्रहमविज्ञानं
शाब्दं देशिकपूर्वकं
बुद्धिपूर्वकृतं पापं
कृत्स्नं दहति वह्निवत्" इति।। [15]

न नु परोक्षब्रहमविज्ञानेनैव सर्वपापानां क्षये जाते किं वा पुनः अपरोक्षब्रहमसाक्षात्कारेणेति चेदुच्यते।। अपरोक्ष ब्रहमविज्ञानमेव निखिलसंसारदुःखनिवर्तकं न तु परोक्षब्रहमविज्ञानम्।। तदुक्तम्–

"अपरोक्षात्मविज्ञानं
शाब्दं देशिकपूर्वकं
संसारकारकाज्ञान

तमसश्चण्डभास्करः" इति।। [16]

अपरोक्षब्रहमज्ञानन्तु गुरूपदेशेन, श्रवणमनन निदिध्यासनैश्चोत्पद्यते।। "आचार्यवान् पुरूषो वेद" (छा. उ. * 6. 14. 2)
"आत्मा वा अरे द्रष्टव्य." (बृ. उ. * 2. 4. 5) इत्यादि श्रुतयोऽत्र प्रमाणम्।। यदा कश्चन पुरूषः अविद्याकामादिभिः स्वरूपानन्दात् प्रच्याव्य अस्मिन् संसारारण्ये क्षिप्तः संसारार्णवतरणाभिलाषी सन् कञ्चनाचार्यमाश्रयति।। तदा दयापरवशेनाचार्येण नाऽसि त्वं संसारी किन्तु तत्वमसीत्युपदिष्टात्मस्वरूपः ब्रहमण. परोक्षज्ञान प्राप्नोति।। ततः मननादिभिः तस्यापरोक्षब्रहमज्ञानमुदेतीति परोक्षज्ञानमपरोक्षज्ञानसाधकं भवति।। एतावत्पर्यन्तमथशब्दो व्याख्यातः।। इदानीमतश्शब्दो व्याख्यायते।।

अतःशब्दार्थविचारः

अत्र भाष्यकारैरूक्तं "अतश्शब्दो हेत्वर्थः" इत्यादि।। तथा चानेन ब्रहमजिज्ञासायां हेतुः प्रदर्शितः।। अत्र पूर्वपक्षिण. इयमाशंका।। यद्यपि साधनचतुष्टयसम्पत्तिः ब्रहमजिज्ञासायां हेतुः तथापि तन्न संभवति।। तथाहि – "अक्षय्यं ह वै चातुर्मास्य याजिनः सुकृतिम्" इत्यादि श्रुतिभिः कर्मफलस्यापि नित्यत्वश्रवणेन कर्मफलं सर्वमनित्यं मोक्षस्य आत्मा एक एव नित्यः इत्येवं रूपो नित्यानित्यवस्तुविवेको न सिध्यति।। ततः कर्मफलबलात् सर्वस्माद्वैराग्यं न सिध्यति, तदसिद्धौ च कर्मत्यागलक्षणोपरतिसहितं शमादि षट्कमपि न संभवति।। शमाद्यभावे मुमुक्षुत्वमपि न संभवति।। अपि च "अहंकर्ता" "अहं भोक्ता" इत्यादि प्रात्यक्षिकप्रमाणविरूद्धत्वात्, जीवस्य ब्रहमाऽभिन्नत्वं नोपपद्यते।। अतो जीवस्य ब्रहमात्मैक्यस्य मोक्षाय प्रवृत्तिर्न भवतीति न तस्य लेशतोऽपि मोक्षप्रवृत्तिः।।

तत्रेद समाधानम्।।

श्रुतिस्तावत् प्रत्यक्षेण "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यकृतो लोकः क्षीयते" (छा. उ. * 8.1.6) इत्यादि कर्मणोऽनित्यफलत्वं

"ब्रहमविदाप्नोति परम्" (तै.उ. * 2.1) इत्यादि मोक्षस्य नित्यत्वञ्च दर्शयति।। अपि च यद्यपि "अक्षय्यं ह वै" इत्याद्याः श्रुतय· कर्मणां नित्यफलत्वं दर्शयन्ति तथापि तन्नित्यत्वं सापेक्षिकमेव न तु पुनरावृत्ति निवृत्तिरूपम्।। तदुक्तं पौराणिकैः –"आभूतसंप्लवं स्थानं अमृतत्वं हि भाष्यते" इति।। उक्तञ्च गीतायाम् "आब्रहमभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इति।। तथा च कर्मणोऽनित्यफलत्वमवश्यमङ्गीकर्तव्यमेव।। एवमेव जीवस्य ब्रहमाभिन्नत्वं यद्यप्यहं कर्ता अहं भोक्ता इत्यादि प्रात्यक्षिकानुभवविरूद्धं तथापि जीवब्रहमैक्यप्रतिपादक "तत्वमसि" "असङ्गोह्ययं पुरुषः" इत्यादि श्रुतिभिः विद्वदनुभवाच्च, अतीन्द्रियार्थे श्रुतिरेव शरणमिति नियमाच्च ब्रहमणः जीवाभिन्नत्वमुपपद्यत एव।। ततः अविद्यावशात्परिच्छिन्नजीवभावं गतस्य आत्मनः ब्रहमत्वकामना उपपद्यते इति मुमुक्षुत्वं तस्योपपन्नमेव।।

एतावता साधनचतुष्टयसम्पत्त्यनन्तरं कर्मफलानामनित्यत्वात् ज्ञानफलस्य मोक्षस्य च नित्यत्वात् नित्यफलेच्छुना ब्रहमजिज्ञासा कर्तव्या इत्यर्थः सिध्यति।।

ब्रहमजिज्ञासाशब्दविवरणम्

व्याप्त्यर्थकबृहतेर्धातोः ब्रहमपदव्युत्पत्तिः।। "वेदास्तत्वं तपो ब्रहम ब्रहमा विप्रप्रजापतिः" इति [17] वचनात् ब्रहमशब्दः तत्तदर्थेषु प्रयुक्तः इति ज्ञायते।। वेदेऽपि ब्रहमशब्दोऽनेकार्थेषु प्रयुक्तः दृश्यते।। तथाहि – ब्रहमशब्दः "यस्य ब्रहम च क्षत्रञ्च" (क. उ. * 1. 2. 24) इत्यादौ ब्राहमणजातौ, "ब्रहम आयाति" इत्यादौ जीवे, "स एनान् ब्रहम गमयति" (छा. उ. * 4. 15. 6) इत्यादौ हिरण्यगर्भे, " ब्रहम वेद ब्रहमैव भवति" (मु. उ. * 3. 2. 9) इत्यादौ निर्विशेषब्रहमणि च प्रयुक्तः दृश्यते।। ब्रहमणः लक्षणं स्वरूपादिकञ्च "जन्माद्यस्य यतः" इत्यादिसूत्रैः उत्तरत्र प्रतिपादयिष्यते इति ब्रहमशब्दस्य न जात्याद्यर्थान्तरमाशंकितव्यम्।।

ब्रहमजिज्ञासा इत्यत्र धर्मायजिज्ञासा इति वत् ब्रहमणे जिज्ञासा इति वदतः पूर्वपक्षिणोऽभिप्रयः एवं निराक्रियते।। तथाहि –

ब्रहमणे जिज्ञासा ब्रहमजिज्ञासा इत्युक्तौ ब्रहमणः

चतुर्थ्यन्तपदप्रतिपाद्यस्य फलत्वं लभ्यते यथा "तृप्त्यै भुंक्ते" इत्यत्र चतुर्थ्यन्तपदप्रतिपाद्यस्य तृप्तेः फलत्वं भोजनकर्मत्वञ्चान्नादेः इति कर्मत्वमन्यस्य फलत्वमन्यस्य।। तथा च फलत्वं ब्रहमणः जिज्ञास्यत्वमन्यस्य स्यात्।। तच्च न युक्तम्।। कुत इत्युक्तौ सर्वासु श्रुतिषु ब्रहमण एव विचार्यत्वेनोदघोषणात्।। अतः ब्रहमणः जिज्ञासा ब्रहमजिज्ञासा इति षष्ठीसमासः एवादर्तव्यः।।

अत्र षष्ठीसमासपक्षेऽपि शेषषष्ठी वा कर्मणि षष्ठी वा इति शंकायां अत्र ब्रहमणः इति कर्मणि षष्ठी न शेषे' इति कर्मषष्ठीवाद एव समर्थितः भगवत्पादैः।। अत्र रत्नप्रभाकाराः।। तथाहि –

जिज्ञासा इत्यत्र सन् प्रत्ययवाच्यायाः इच्छायाः ज्ञानं कर्म।। तस्य ज्ञानस्य ब्रहम कर्म।। ज्ञानेच्छाकृतीनां सकर्मकत्वात् कर्मज्ञानं विना ज्ञातुमशक्यत्वाच्च।। इच्छायाः विषयज्ञानजन्यत्वाच्च प्रथमापेक्षितं कर्मैव षष्ठया वाच्यं न शेष इति।। अपि च प्रत्यक्षेण श्रुतं कर्म त्यक्त्वा अन्यदश्रुतं कल्पयन् पिण्डमुत्सृज्य करं लेढीति न्यायमनुसरतीति शेषषष्ठीवादिन मुद्दिश्य रत्नप्रभाकाराणामाक्षेपः।। श्रुत्या "तद्विजिज्ञासस्व तदब्रहमेति" इति प्रत्यक्षेण कर्मण. श्रुतत्वात् कर्मषष्ठीपक्ष एव समीचीन.।। तथा च जिज्ञासाकर्मत्वं ब्रहमण. सम्भवतीति ब्रहमकर्मकजिज्ञासा कर्तव्या इत्यर्थः संगृहीतो भवति।।

एवञ्च ब्रहमण· जिज्ञासाविषयत्वसंभवेऽपि फलत्वं कस्येति तु विचारणीयं भवति।। यद्यन्यत्फलं स्याद् ब्रहमणः ब्रहमविचारेणान्यस्य फलस्य प्राप्तिरित्युक्त भवति।। तच्चाद्वैतसिद्धान्त विरूद्धम्।। अद्वैतसिद्धान्ते ब्रहमणोऽन्या मुक्तिश्चेत् ब्रहमैकं मुक्तिरेकेति द्वैतमेवापद्येत।। तच्च नाऽभीष्टमिति शंकायां समाधानमेवं वक्तव्यम्।।

ब्रहमैव जिज्ञासाविषयः ब्रहमैव फलम्।। अत्राज्ञातत्वेन ब्रहमणः जिज्ञासाविषयत्वं ज्ञातत्वेन फलत्वमिति विज्ञेयम्।। ब्रहमज्ञानन्तु भग्नावरणचिद्रूपं, ब्रहमैव मुक्तिः।। अत एव भगवत्पादैः जिज्ञासापदविवरणे "अवगतिपर्यन्तं ज्ञानं सन् वाच्यायाः इच्छायाः कर्म "इत्युक्तम् ।। [18]

तत्रावगतिपदमेव व्याख्यातं रत्नप्रभाकारै.॥ तथाहि – 'आवरणनिवृत्तिरूपाभिव्यक्तिमच्चैतन्यमवगतिः॥ सैव पर्यन्तोऽवधिर्यस्याऽखण्डसाक्षात्कारवृत्तिज्ञानस्य तदेव जिज्ञासायाः कर्म तदेव फलम्' इत्यादि॥ [19] एवञ्चात्र "आवरणनिवृत्तिरूपाभिव्यक्तिमच्चैतन्यमवगतिरिति, तत्फलं ब्रहमज्ञानमेव जिज्ञासासूत्रघटकज्ञाधातुप्रतिपाद्यमिति च स्पष्टं प्रतिपादितम्॥ आवरणद्वयात्मकाविद्यायाः स्वरूपं तन्निवृत्तिश्च अध्यासस्वरूपवर्णनावसरे प्रागेव प्रदर्शितमस्माभिः इतीहोपरम्यते॥ तथा च ब्रहमणः एव जिज्ञासाविषयत्वं फलत्वञ्चेत्यत्र न कोऽपि विरोधः॥

यदि मुक्तिः ब्रहमरूपा तर्हि ब्रहम सिद्धमेवेति सिद्धस्य साधनाय श्रवणात्मकब्रहमविचारः व्यर्थः स्यात्॥ यद्यविद्यानिवृत्तिः ब्रहमज्ञानसाध्या सैव मुक्तिश्चेत्, अविद्यानिवृत्तेरभावरूपत्वेनान्दस्वरूपत्वं न स्यात्॥ यदि ब्रहम अविद्यानिवृत्तेरन्यं स्यात्तर्हि अद्वैतहानिः॥

अविद्यानिवृत्तिविशिष्टब्रहम चेन्मुक्तिः विशेषणांशस्य मिथ्यात्वेन विशिष्टस्यापि मिथ्यात्वापत्या पारमार्थिकत्वानुपपत्तिः॥ अतः अविद्यानिवृत्युपलक्षितचैतन्यं मोक्ष इति वक्तव्यम्॥ तथा च अविद्यानिवृत्तेरूपलक्षणविधया निवेशेन, विशिष्टत्वासंभवात्, मुक्तेश्चैतन्यरूपत्वेन स्वप्रकाशानन्दस्वरूपमपि सिध्यतीति न कोऽपि दोषः॥ अत्र केचित् सालोक्य सामीप्य सारूप्य सायुज्य मुक्तिरिति मुक्ति बहुधा संगिरन्ते॥ सालोक्यं नाम उपास्यदेवतालोकप्राप्तिः॥ तथा च उपास्यदेवतालोके यत्र कुत्र स्थितिः सालोक्यमुक्तिः॥ सामीप्यमुपक्तिर्नाम उपास्यदेवतायाः समीपे स्थितिः॥ सारूप्यमुक्तिर्नाम उपास्यविष्ण्वादिशंखचक्रचतुर्भुजादि आकारं लब्ध्वा तत्र स्थितिः सायुज्यमुक्तिर्नाम यथा लक्ष्मी. वक्षस्थले वर्तते तथा भगवत्स्वरूपे सगुणे स्थितिः॥ एताश्चतुर्विधाः मुक्तयः कर्मोपासनासाध्या. अनित्याः एवेति वेदान्तिनामाशयः॥

परमा मुक्तिस्तु सच्चिदानन्दाद्वैतब्रहमस्वरूपा॥ सा च न साध्या परन्तु

सिद्धैव।।सिद्धायामप्यसिद्धत्वभ्रान्त्या, तद्भ्रान्तिमूलाऽविद्यानिवृत्तये श्रवणादौ प्रवर्तन्ते मुमुक्षवः।। स्वस्वरूपावस्थानमुक्तिस्तु सर्वेषां समाना तारतम्यवर्जिता च।। पूर्वोक्तमुक्तयस्तु तारतम्योपेताः भिन्नभिन्नाश्च भवन्ति।। अत एव ब्रहमसूत्रेषु व्यासाचार्यैः "एतेन मुक्तिफलानियमः तदवस्था तद्धृतेः तदवस्था तद्धृतेः" इति सूत्रं प्रणीतम्।। मुक्तिफले नियमो नास्ति तारतम्यं नास्ति।। कालनियमो वा देशनियमो वा तारतम्य वा नास्तीत्यर्थः एवं सर्वेषां समानरूपा मुक्तिः स्वस्वरूपावस्थानमेवेति वेदान्तिनां घण्टाघोष.।। एवञ्च जिज्ञासासूत्रे ज्ञातत्वेन फलत्वं ब्रहमणः इति यद्वचनं तत् सोपपत्तिकं सप्रमाणञ्च भवति।।

इदानीम् ब्रह्म प्रसिद्धं वा अप्रसिद्धं वा इति विचार्यते।। यदि ब्रहम प्रसिद्धम् तर्हि न जिज्ञासितव्यं प्रमाणान्तरसिद्धत्वात्तस्य।। अनधिगताबाधितार्थबोधकत्वं प्रमाणस्य लक्षणम्।। एवं सति यदि ब्रहम प्रसिद्धं चेत् तर्हि तस्याधिगतार्थत्वात् वेदान्तानां प्रामाण्यमेव नोपपद्यते।। यदि ब्रहमाप्रसिद्धं तर्हि अप्रसिद्धस्य जिज्ञासितव्यत्वाभावात् जिज्ञासितव्यत्वे काकदन्तपरीक्षवन्निष्फलत्वाच्च तदापि न तस्य जिज्ञास्यत्वम्।। उक्तञ्च वाचस्पतिमिश्रैः।। तथाहि यदसंदिग्धमप्रयोजनं न तत्प्रेक्षावत्प्रपित्सागोचरः।। यथा समनस्केन्द्रियसन्निकृष्टः स्फीतालोकमध्यवर्ती घटः करटदन्ता वा इत्यादि।।[20] तथा च यत्र यत्र जिज्ञास्यत्वं तत्र तत्र सन्दिग्धत्वसप्रयोजनत्वे इति व्याप्तिर्लोके दृश्यते।।यथा "अथातो धर्मजिज्ञासा" इत्यत्र धर्मजिज्ञास्यत्वं वर्तते।।तत्र सन्दिग्धत्वमपि वर्तते।। अनुष्ठानद्वारा सप्रयोजनत्वमप्यस्ति।। अत्र तु जिज्ञास्यत्वमुपलभ्यते सन्दिग्धत्वञ्च नास्ति।। अहमहं वा न वेति न कैरपि सन्दिह्यते।। नाऽपि विपर्यस्यतेऽहं नाऽहमिति।। अतः व्यापकीभूतसन्दिग्धत्वसप्रयोजनत्वयोरभावात् व्याप्यस्य जिज्ञास्यत्वस्याभावः।। तथा च ब्रहमजिज्ञासा निष्प्रयोजना इति प्राप्ते पूर्वपक्षे, सिद्धान्तस्त्वत्र संग्रहेण प्रतिपाद्यते।। तथाहि–

आत्मा नाम देहेन्द्रियविलक्षणः।। सर्वोऽपि जनः "अहं स्थूलः" "अहं कृशः" "अहं शृणोमि" "अहं पश्यामि" इत्येवं देहेन्द्रियतादात्म्येनैव

देहेन्द्रियधर्मविशिष्टमेवाऽऽत्मानं जानाति न तु देहेन्द्रियातीतं तद्धर्मरहितम्।। तादृशेऽऽत्मनि सर्वेषामविदुषा संशयः वर्तते एव।। विपर्ययोऽपि दृश्यते कर्तृत्वभोक्तृत्वादिना।। अतः तद्रहिततत्वेन आत्मज्ञानार्थं ब्रह्मजिज्ञासा अवश्यं कर्तव्यैव।। तथा च तस्मिन्नात्मनि जिज्ञास्यत्व वर्तते।। सन्दिग्धत्वसप्रयोजनत्वे च वर्तेते।। प्रयोजनञ्च महत् कैवल्यम् इति "ब्रह्मविदाप्नोति परम्" (तै. उ. * 2. 1. 1) इत्यादि श्रुतिभिः प्रतिपाद्यमानं स्पष्टमवगम्यते।।

किञ्च लोके सर्वैरपि आत्मास्तित्वमनुभूयते अस्मत्प्रत्ययविषयत्वादात्मनः।। तदुक्त भगवत्पादैः— "सर्वो ह्यात्मास्तित्वं प्रत्येति न नाऽहमस्मीति" इत्यादि।। अपि चात्मनः निराकरणमसाध्यमेव य एव हि निराकर्ता तस्यैवात्मत्वादिति भगवत्पादवचनात्।। किन्तु अनाद्यविद्यया आत्मनः स्वरूपं तिरोहितम्।। जडात्मकेषु देहेन्द्रियादिषु आत्मबुद्धिः द्रढीभूतः।। एवञ्चात्मा भासमानोऽपि न स्वरूपेण भानं तस्य।।

अयमेवाभ्रियः "अध्येतृवर्गध्यस्थ
पुत्राध्ययन शब्दवत्
भानेप्य भानं भानस्य
प्रतिबन्धेन युज्यते" इति श्लोके

सदृष्टान्तं प्रदर्शितः विद्यारण्यश्रीचरणैः।।[21] एवञ्चात्मनः भानत्वेऽपि स्पष्टरूपेण तत्स्वरूपस्यानवगम्यमानत्वात् दार्शनिकेषु आत्मस्वरूपविषये विविधाः अभिप्रायाः सन्दृश्यन्ते।। तेषाञ्च मतानि "देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृताः जनाः लौकायतिकाश्च प्रतिपन्नाः" इत्यादिवाक्यै. संग्रहेण भगवत्पादैः प्रदर्शितानि वर्तन्ते।। [22] अन्ते वेदान्तमतमपि प्रदर्शितं दृश्यते।।

तेषां पक्षान्तराणां प्रपञ्चो निरासश्च स्वकृत विवरणोपन्यासे एव विस्तरेण प्रदर्शित इति न पुनः प्रादर्शि रत्नप्रभायाम्।। तदुक्त स्वय ग्रन्थकारैः।। "विप्रतिपत्तीनां प्रपञ्चो निरासश्च विवरणोपन्यासेन दर्शितः सुखबोधाय इतीहोपरम्यते।। इति।।[23] रत्नप्रभायान्तु तेषा सिद्धान्तोपबलकानि प्रमाणवाक्यान्येव संग्रहेण प्रदर्शितानि।। रत्नप्रभाव्याख्याने पूर्णानन्दीये

मतानाञ्च तेषां प्रपञ्चनं निराकरणञ्च विवरणोपन्यासोक्तदिशा प्रदर्शितं दृश्यते।।

तदुक्तम्:— "तासां विप्रतिपत्तीनां
सुखबोधार्थमेव हि
प्रपञ्चो हि निरासश्च
संग्रहेणोच्यते मया" इति।। [24]

अत्रास्माभिस्तु पूर्णानन्दीयमनुसृत्यैव पक्षान्तराणां प्रपञ्चनं निराकरणञ्च क्रियते प्रदश्यर्ते च वेदान्तमतं सिद्धान्तरूपेण ।।

**आत्मनः स्वरूपम्**

शास्त्रोपदेशसंस्कारशून्याः प्रकृताः चार्वाकैकदेशिनः "स वा एष पुरुषोऽन्नरसमयः" (तै. आ * 2. 1. 1) "विज्ञानघन एव एतेभ्यः भूतेभ्यः समुत्थाय तान्येवाऽनुविनश्यति न प्रेत्यसंज्ञाऽस्ति" (बृ. उ. * 2. 4. 12) इत्यादिवाक्यैः "स्थूलोऽहम्" "कृशोऽहम्" इत्याद्यनुभवाच्च स्थूलशरीरमात्मेति वदन्ति।।

चार्वाकेष्वन्ये एवमभिप्रयन्ति यत् "मम शरीरम्" इति भेदप्रतीतेस्सत्वात्, इन्द्रियाणामभावे शरीरचलनाभावाच्च न शरीरमात्मा, किन्तु "चक्षुरादयस्तेह वाचमूचुः" (बृ.उ. * 1. 3. 2) इत्यादिवाक्यैः, काणोऽहं "बधिरोऽहम्" इत्याद्यनुभवाच्च इन्द्रियाणामात्मत्वम् इति।।

अपरे चार्वाकाः "मम इन्द्रियाणि" इति भेदप्रतीतेस्स्वप्ने चक्षुरादीन्द्रियाणां व्यवहाराभावेऽपि अहमित्यात्मनि परिपूर्णप्रत्ययात्, मनस्सम्बन्धाभावे इन्द्रियाणां चलनाभावाच्च नेन्द्रियाणामात्मत्वम्। किन्तु "मन उवाच" "तस्माद्वा एतस्मात्प्राणमयादन्योऽन्तर आत्मा मनो मयः" (तै. उ * 2. 3. 1) इत्यादिवाक्यैः, मनस्सम्बन्धाभावे इन्द्रियाणा चलनाभावात्, "संकल्पवानहम्" "विकल्पवानहम्" इत्याद्यनुभवाच्च मन एव आत्मेत्यभिप्रयन्ति।।

बौद्धैकदेशिनो विज्ञानवादिनो योगाचाराः एवमभ्युपगच्छन्ति।। तथाहि

– लोके मम बुद्धिरिति प्रतीतेः सत्वात्, अहं बुद्धिरिति प्रतीतेरभावाच्च न बुद्धिः आत्मा भवितुमर्हति।। किन्तु "असदेवेदमग्र आसीत्" (छा. उ. 2. 13. 1) इत्यादिश्रुतेः, सुषुप्तौ 'नाऽन्यदस्त्येव', "नाऽहमप्यासम्" इति व्युत्थितजनस्य सर्वाभावपरामर्शानुभवाच्च शून्यमेव आत्मा इति।।

तार्किकास्तु पूर्वोक्तमभिप्रायमेवं निराकुर्वन्ति।। लोके "सुखमहमस्वाप्सम्" इति व्युत्थितस्य परामर्शान्यथानुपपत्त्या सुषुप्तावपि अज्ञानादि साक्षित्वेन परिपूर्णाऽऽत्मप्रत्ययाङ्गीकारात्, अहमुल्लेखिप्रत्यभिज्ञानाच्च न शून्यमात्मा भवितुमर्हति।। किञ्च अमूर्तः सर्वाकारशून्येन निःस्वभावः परमार्थः इति वदतां शून्यवादिनां मतं कल्पनामात्रम्।। कुत इत्युक्तौ "परमार्थो निस्स्वभाव": इत्यस्य परस्परविरूद्धत्वात्।। किन्तु 'कर्ता' 'बोद्धा' (प्र. उ. 4. 9) इत्यादिश्रुतिभिः, ममप्रत्ययालम्बनस्याहमुल्लेखमानस्य शरीरादेः भोक्तृत्वाद्यनुपपत्तिरूपयुक्तेः, "अहं कर्ता" 'अहं भोक्ता' इत्याद्यनुभवाच्च देहेन्द्रियादिभ्यो व्यतिरिक्तः कर्ता भोक्ता प्रत्यभिज्ञानात् स्थिरः आत्मेत्यभिप्रयन्ति।।

सांख्यास्तु पूर्वोक्तवादमेवं निराकुर्वन्ति।। तथाहि – कर्तृत्वं हि क्रियावेशः।। न हि सर्वगतस्य निरवयवस्य आत्मानः परिणामलक्षणक्रियान्वयः सम्भवति।। न च बुद्धेः कर्तृत्वमात्मनो भवतीति वाच्यम्, तन्मते तादात्म्याध्यासाभावात्।। किञ्च आत्मनः कर्तृत्वे "अनश्नन्योऽभिचाकशीति" (मु. उ. 3. 1. 1) इत्यादिश्रुतयो बाध्येरन्।। किन्तु तयोरन्येत्यादि श्रुतिभिः, दृश्यावभासत्वमात्रात्मक भोक्तृत्वोपपत्तिरूपयुक्तेः "अहं भोक्ता" इत्याद्यनुभवाच्च भोक्तैवात्मेति सांख्याः।।

सेश्वरसांख्याः योगिनः पूर्वोक्तवादमेव खण्डयन्ति।। तथाहि – ईश्वरस्य भोक्तृत्वे सर्वज्ञत्वादिकं न सिध्यति।।

अपिच "नाऽहमीश्वरः किन्तु ससारी" इत्यनुभवाच्च भोक्तुर्जीवस्य नेश्वरत्वम्।। किन्तु "यस्सर्वज्ञस्सर्ववित्" (मु. उ. 1. 1. 9) "आत्मानमन्तरो यमयति" इयादि श्रुतेः सर्वज्ञत्वाद्यनुपपत्तिरूप युक्ते, ईश्वरोऽस्तीत्यनुभवाच्च

देहादिव्यतिरिक्तादहंप्रत्यय विषयादभोक्तुर्जीवादन्यः सर्वस्येशिता निरतिशयत्वोपाधिकः ईश्वर इति वदन्ति।।

वेदान्तिनस्तु पूर्वोक्तश्रुतियुक्त्यनुभवानामाभासत्वात्, "तत्वमसि" (छा. उ. * 1. 4. 10) इति विद्वदनुभवाच्च "आत्मा स भोक्तुः" इति आत्मस्वरूपं प्रतिपादयन्ति।। तस्यायमर्थः।। भोक्तुः भोक्तृत्वेन प्रतीयमानस्य जीवस्य आत्मस्वरूपं पारमार्थिकरूपं न भवतीत्यर्थः।। तथा च प्रत्यगस्थूलोऽचक्षुरप्राणोऽमनोऽकर्ता चैतन्यं चिन्मात्रं स सत् इत्यादि प्रबलश्रुतेः, भोक्तृत्वाद्यवभासस्य मिथ्यात्वात्, स्वतः नित्यशुद्धबुद्धमुक्तस्वभावः स्वयंप्रकाशमानो जीव इति जीवब्रह्मणोरैक्यमेव वेदान्तिनां मतमिति जीवो ब्रह्मैव।। स एवात्मा।।

एवञ्चात्मस्वरूपविषये शास्त्रकाराणां नैकोऽभिप्रायः संदृश्यते इति तत्रात्मनः यथार्थज्ञानेनैव निश्रेयसप्राप्तिः।। तद्विपरीते न केवलं निश्रेयसहानिः अपि त्वनर्थपरम्पराप्राप्तिश्च।। अनुसन्धेयञ्चात्र भगवत्पादवचनम्।। तथाहि – एवं बहवो विप्रतिपन्नाः युक्तिवाक्यतदाभाससमाश्रयाः सन्तः।। तत्राविचार्य यत्किञ्चित्प्रतिपद्यमानो निश्रेयसात् प्रतिहन्येतानर्थं चेयात्।। इति।। किञ्चात्र–

"अन्धं तमः प्रविशन्ति"

"ये के चात्महनो जनाः"

"योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते
किं तेन न कृतं पापं चौरेणात्मापहारिणा"

इति श्रुतिस्मृतिभ्यां, मतान्तराश्रयणेऽनर्थं प्रदर्शितं रत्नप्रभाकारैः।। तथा च साधनतुष्टयसम्पत्त्यनन्तरं कर्मफलस्यानित्यत्वात् ज्ञानस्य नित्यत्वाच्च ब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्यः इत्ययं जिज्ञासाधिकरणस्य परमाशयः।।



रत्नप्रभाविमर्शेपञ्चमोऽध्यायः

## जन्माद्यधिकरणम्

सर्वानर्थरूपसंसारनिवृत्तये ब्रहमजिज्ञासा कर्तव्या इति पूर्वाधिकरणे निरूपितम्।। लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरिति नियमेन लक्षणादिकं विना तस्य ब्रहमणः जिज्ञास्यत्वं नोपपद्यत इति तन्निरूपयितुमिदं जन्माद्यधिकरणमारब्धम्।।अधिकरणेऽस्मिन् ब्रहमणः स्वरूपतटस्थलक्षणे प्रदर्शिते।। अस्याधिकरणस्याधारभूतं सूत्रं "जन्माद्यस्य यतः" इति।। अस्य जगतः जन्मस्थितिभङ्गं यस्मात् तदब्रहमेति सूत्रसारांशः।।

"यतो वा इमानि भूतीनि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तद् ब्रहमेति" (तै. उ. * 3. 1) इति वाक्यमधिकरणस्यास्य विषयः।।

तद्वाक्यं ब्रहमणः लक्षणं निर्वक्ति वा न वेति संशयः।।जन्मादयः जगतो धर्माः।।अतः तैः ब्रहमणा सम्बन्धः कथम्? अपि च सत्यादिभिन्नपदैः वाच्यं तद् ब्रहम कथमखण्डं भवति? अतः ब्रहमणः स्वरूपतटस्थलक्षणे द्वेऽपि न सिध्यतः इति पूर्वपक्षः।।

अत्र सिद्धान्तस्तु तावदयम्।।यद्यपि जन्मादीनि जगतो लक्षणानि तथापि तेषां कारणं ब्रहमैव।। यो भुजङ्गः स स्रगिति न्यायेन यत् जगत्कारणं तद् ब्रहमेति बाधसामानाधिकरण्यात् तटस्थलक्षणं सिध्यति।। एवमेव सत्यज्ञानादीनि यद्यपि भिन्नार्थकानि तथापि तेषां पर्यवसानं ब्रहमण्येव।। एतेन ब्रहमणः स्वरूपलक्षणं सिध्यति।। अपि च प्रत्यक्षादिप्रमाणैः प्रतिपाद्यं ब्रहम जगतः अभिन्ननिमित्तोपादानकारणं भवति।। एवञ्च लक्षणप्रतिपाद्यत्वात् ब्रहमणः जिज्ञास्यत्वमुपपन्नम्।।

लक्षणं द्विविधं स्वरूपलक्षणं तटस्थलक्षणञ्चेति।। स्वरूपमेव लक्षणं स्वरूपलक्षणम्।। [1] यथा सत्यज्ञानादिकं ब्रहमणः स्वरूपलक्षणम्।।

यावल्लक्ष्यकालमनवस्थितत्वे सति तद्व्यावर्तकत्वं तटस्थ लक्षणम् [2] ।। यथा गन्धवत्वं पृथिवीलक्षणम्।। महाप्रलये परमाणुषु उत्पत्तिकाले घटादिषु गन्धाभावात्, प्रकृते ब्रहमणि च

जगज्जन्मादिकारणत्वम्।।

लोके सर्वथा अज्ञायमानं वस्तु प्रथमतः तटस्थलक्षणेन आपाततः, अनन्तरं स्वरूपलक्षणेन च प्रतिपाद्यते।। यथा – शाखाग्रे चन्द्रः प्रकृष्टप्रकाशश्चन्द्रः इत्यादिरीत्या।। तथा च वस्तुनः सामान्यज्ञानं तटस्थलक्षणेन विशेषज्ञानं स्वरूपलक्षणेनेति विज्ञेयम्।।

अत्र किञ्चिद्वक्तव्यमस्ति।। "अथातो ब्रहमजिज्ञासा" इत्यत्र प्रतिपादितं ब्रहम निर्गुणं वा सगुणं वेति।। निर्गुणञ्चेत् निर्गुणस्य ब्रहमणः उत्तरसूत्रोक्तं जगज्जन्मस्थितिलयकारणत्वं न घटते।। तद्घटनार्थं सगुणमेवेति चेत् सगुणब्रहमसाक्षात्कारेण मुक्तिर्न सिध्यति।। अतः प्रथमसूत्रेण निर्गुणं द्वितीयसूत्रेण सगुणञ्च प्रतिपादितमिति वक्तव्यत्।। तथा च सूत्रयोः वैरूप्यप्रसङ्गः एकवाक्यता भङ्गश्च।।

तत्रेदं समाधानम्।। निर्गुणमेव ब्रहम प्रथमसूत्रेणोक्तम्।। अस्यैव द्वितीयसूत्रेण लक्षणमुक्तम्।। तच्च लक्षणं जगज्जन्मस्थितिलयकारणत्वं तटस्थलक्षणमेवेति न कोऽपि विरोधः।। यथा "काकवत् देवदत्तगृहम्" इत्यत्र काकः देवदत्तगृहसूचकं तथा जगज्जजन्मस्थितिलयकारणत्वमपि ब्रहमण इति तटस्थलक्षणम्।। अतो न कोऽपि दोषः।।

अत्र सूत्रे जन्मादि पदेन ब्रहमणः तटस्थलक्षणमभिहितम्।। 'जन्मदि' इत्यत्र जन्मोत्पत्तिरादिरस्येति तदगुणसंविज्ञानो बहुव्रीहिरिति भाष्यकाराः।। [3] तथाहि– बहुव्रिहिर्द्विविधः तद्गुणसंविज्ञानोऽतद्गुण सविज्ञानश्चेति।। तस्य समासस्य गुणानामवयवानां अप्यन्यपदार्थवत् क्रियान्वयार्थं विज्ञाने तदगुणसंविज्ञानबहुव्रीहिः।। तद्यथा – लम्बकर्णो देवदत्त इति।। अत्र देवदत्तैकदेशमेव विशेषणं कृत्वा देवदत्तो बोध्यते इति लक्षणसमन्वय.।। अपरस्त्वतदगुण संविज्ञानो बहुव्रीहि.।। तद्यथा – चित्रगुमानय इत्यत्र चित्राः गावः यस्य सः चित्रगु. (देवदत्तः) इत्युक्ते न चित्रगवां समासार्थत्वं किन्तु देवदत्तस्येत्ययमतद्गुण संविज्ञानो बहुव्रीहिः।। प्रकृते तु जन्मादिपदस्य तद्गुणसंविज्ञानबहुव्रीहित्वकथनेन जगतः जन्मस्थितिलयाः यस्मात् तद् ब्रहमेति जगज्जन्मादिकारणत्वं ब्रहमणः

तटस्थलक्षणम्।। अत्र सृष्टेः प्राक् महाप्रलयानन्तरञ्च ब्रह्मणः जगत्कारणत्वाभावात् कादाचित्कत्वे सति व्यावर्तकत्वं ब्रह्मणि संभवतीति लक्षणसमन्वयः।। तथा च जन्मादिकं प्रपञ्चनिष्ठं न तु ब्रह्मनिष्ठमिति प्रपञ्चो ब्रह्मणि कल्पितः तस्य प्रतियोगिकारणमपि ब्रह्मणि कल्पितमिति नेदं ब्रह्मणः स्वरूपलक्षणम्।।

अद्वैते ब्रह्मणः जगदभिन्ननिमित्तोपादानकारणत्वमुक्तम्।। अत्र कुलालादिदृष्टान्तेन उपादानकारणत्वं निमित्तकारणत्वञ्चैकस्मिन् न सम्भवतीति वदन्त तार्किकं सुखादिदृष्टान्तप्रदर्शनेन समादधति रत्नप्रभाकाराः।।[4] तत्रेदं विवरणम् – सुखं प्रति अदृष्टद्वारा निमित्तत्व समवायिकारणत्वञ्च आत्मनि दृष्टम्।। तस्मादभिन्ननिमित्तोपादानकं सुखमि ति दृष्टान्तोपपत्तिः।। अत्रादिपदेन कर्मसंयोगौ गृह्येते इति पूर्णानन्दः।।[5] तथाहि – स्वकृतयागादिकं प्रति कर्तृत्वमुपादानत्वञ्च पुरुषे दृश्यते तस्मादभिन्ननिमित्तोपादानकं कर्म।। एवमेव घटाकाशसंयोगं प्रति निमित्तत्वं समवायिकारणत्वञ्चाकाशे अस्तीत्यभिन्ननिमित्तोपादानकस्संयोगः इत्यादि।। किञ्च पुरुषाभ्यूहमात्रस्य तर्कस्यातीन्द्रियार्थे स्वातन्त्र्यायोगात् तत्र श्रुतिरेवाश्रयणीया।। श्रुतिस्तु "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति" इत्यादिवाक्यैः ऊर्णनाभि[6] दृष्टान्तेन च ब्रह्मणः जगदभिन्ननिमित्तोपादानकारणत्वं प्रदर्शयति।।

सूत्रगत "अस्य" पदेन जगन्निर्दिश्यते।। तदुक्तं भगवत्पादैः – 'अस्य' इति प्रत्यक्षादिसंनिधापितस्य धर्मिणः इदमा निर्देशः इति।।[7] अत्र कारणस्य ब्रह्मणः सर्वज्ञत्वं निरूपयितुं कार्यस्य जगतः "नामरूपाभ्याम्" इत्यादि विशेषणानि प्रदर्शितानि भगवत्पादैः।। अत्र नामरूपाभ्यां व्याकृतस्य इत्यत्र "इत्थं भावे तृतीया" इत्युक्तं रत्नप्रभाकारैः।। तथा च नामरूपाभिन्नतया व्यक्तीकृतस्येति तेषामाशयः।। अत्र चाभियुक्तोक्तिः।। तथाहि –

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्
आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्।। इति।।

यथा कुम्भकारः प्रथमं कुम्भशब्दाभेदेन विकल्पितं पृथुबुध्नोदराकारस्वरूपं बुद्धावालिख्य तदात्मना कुम्भं बहिः प्रकटयति, तथा परमकारणमपि

स्वेक्षितं नामरूपात्मना व्याकरोतीति ब्रहमणः जगत्कारणत्वम्।।

तत्र सांख्याः प्रधानात् बौद्धा– शून्यात् जगतः उत्पत्तिभ्युपगच्छन्ति।। तन्न संभवति।। आद्यकार्यस्य चेतनजन्यत्वात् अचेतनात्प्रधानात् शून्याद्वा तस्य संभवो नोपपद्यते।। शून्यवादिनो बौद्धाः शून्याज्जगतः उत्पत्तिं समर्थयितुं केशोण्ड्कभ्रान्तिमुदाहरन्ति।। तेषामयमाशयः।। करसंमृदितलोचनरश्मिप्रसरे सति केशपिण्डज्ञानं जायते स एव केशोण्ड्कभ्रमः इति व्यवह्रियते।। [8] न हि तत्र किमप्यधिष्ठानं भासते इति सर्वत्रारोपेऽधिष्ठानापेक्षा न दृश्यते इति।। तत्रेदं समाधानम् – शून्ये केशोण्ड्कभ्रान्तिर्न भवति।। तेजस्येव तस्य भ्रान्तिः न तु शून्ये इति तत्र तेजोऽधिष्ठानत्वमनिवार्यम्।। किञ्च सकलगुणविशिष्टस्य जगतः उत्पत्ति. शून्यादेवेति कथने परस्परव्याघातः।। अतो न समीचीनस्तेषामभिप्रायः।।

लोकायतिकास्तु स्वभावतः जगतः उत्पत्तिमभ्युपगच्छन्ति– तैरुक्तम् –

"अग्निरुष्णो जलं शीतः
समस्पर्शस्तथाऽनिलः
केनेदं चित्रितं येन
स्वभावात्तद्व्यवस्थितिः" इति।। [9]

नैतत्साधु।। स्वभावादेव जगतः उत्पत्तिरित्यभ्युपगम्यमाने "प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य" इति विशेषणं जगतो नोपपद्यते।। तथा हि – स्वर्गस्य क्रियाफलस्य मेरुपृष्ठं देशः, देहपातादूर्ध्वं कालः, उत्तरायाणमरणादिनिमित्तञ्च प्रतिनियतम्।। [10] तथा च जगदिदं व्यवस्थितदेशकालनिमित्तक्रियाफलानामाश्रयः इति तस्योत्पत्तिं केवलस्वभावान्न संभावयितुं शक्यते।।

अत्रोक्तं विशेषेण भामत्याम् – केचित्खलु प्रतिनियतदेशोत्पादाः यथा कृष्णमृगादयः।। केचित् प्रतिनियतकालोत्पादाः यथा कोकिलारावादयः।। केचित्प्रतिनियतनिमित्ताः यथा नवाम्बुदध्वानादिनिमित्ताः बलाकगर्भादयः।। केचित्प्रतिनियतक्रियाः यथा – ब्राहमणानां याजनादयो नेतरेषाम्।। एवं

प्रतिनियतफलाः।।यथा – केचित्सुखिनः, केचिद्दुःखिनः य एव सुखिनः त एव कदाचिद्दुखिनः।। सर्वमेतदाकस्मिकापरनाम्नि यादृच्छिकत्वे च, स्वाभाविकत्वे चासर्वशक्तिकर्तृकत्वे च न घटते।। परिमितज्ञानशक्तिभि· ग्रहलोकपालादिभिः ज्ञातुं कर्तुञ्चाऽशक्यत्वात्" इत्यादि।। [11] अपि च स्वभाववादं निराकुर्वद्भिः रत्नप्रभाकारैरेवमुक्तम्।। तथाहि – किं नाम स्वभावः ? स्वयमेवस्वस्य हेतु. उत कारणाऽनपेक्षत्वम्।। आद्ये आत्माश्रयः, द्वितीये, कार्यस्य कारणानपेक्षत्वं न सम्भवति।। तथात्वे धान्यार्थिनां भूविशेषे वर्षाकालादिकधान्यारोपणादिकं विनाऽपि बीजोत्पत्ति· जायेत।। तथा न सम्भवतीति स्वभावादेव जगतः उत्पत्तिरिति वक्तु न युक्तम्।। इति।। [12]

हैरण्यगर्भवादिनस्तु हिरण्यगर्भादेव सृष्टिमभ्युपगच्छन्ति।। तदपि न समीचीनम्।।हिरण्यगर्भस्यापि जगदन्तःपतितत्वेन न तस्य जगत्कारणत्वम्।। उक्तञ्च – "हिरण्यगर्भं पश्यत जायमानम्" (श्वे.उ. * 4. 12) इत्यादि।। तथा च श्रुत्युक्तः सूत्रात्मा मुख्यप्राणः, समष्टिलिङ्गशरीराभिमानी प्रथमो जीवः हिरण्यगर्भः इति वेदान्तशास्त्रे प्रसिद्धः।। किञ्च मनसाप्यचिन्त्यरचनारूपस्येति जगद्विशेषणं हैरण्यगर्भसृष्टिवादं निराकरोति।। अत्र विशेषणोक्तं भामत्याम् एकस्याः अपि हि शरीररचनायाः रूपं मनसा न शक्यं चिन्तयितुं कदाचित्, प्रागेव जगद्रचनायाः किमङ्ग पुनः कर्तुमित्यादि।। [13] तथा च एतादृशविशिष्टगुणवतः जगतः सृष्टिं, हिरण्यगर्भात्संभावयितुं नोपपन्नम्।।

तार्किकास्तु ईश्वराज्जगतः सृष्टिमभ्युपगच्छन्ति।।ते तु क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वाद्घटवदित्यनुमानेनेश्वरं साधयन्ति।। किञ्च यत्कार्यं तत्सकर्तृकमिति व्याप्तिज्ञानं कर्तारं साधयत्सत् सर्वज्ञमीश्वरं साधयति ततोऽत्र श्रुतेरावश्यकता नास्तीति तेषामाशयः।। अपि चैतद्व्याप्तिज्ञानमेव श्रुत्यनुग्राहकयुक्तिमात्रत्वेन स्वतन्त्रमिति अनुमानस्य स्वातन्त्र्यं मन्यन्ते।। अत्रानुमानस्याभासत्वं "मन्यन्ते" इति पदेन सूचितं भाष्यकारैरिति रत्नप्रभाकाराः।। [14] अत्रानुमानस्याभासत्वं तैरेवं निरूपितम्।। तथाहि– अङ्कुरादौ तावत् जीवः कर्ता न भवति, जीवाद्भिन्नस्य सर्वस्याचेतनत्वात् कर्ता नास्त्येवेति व्यतिरेकसिद्धि– तथा च यत्कार्यं तत्सकर्तृकमिति

व्याप्तिज्ञानमपि न सिध्यति।। एवमेव "कर्ता सर्वज्ञः जगत्कारणत्वात्" इत्यत्रापि बाधः संभवति।। तथाहि –ज्ञानं द्विविधं जन्यं नित्यञ्चेति।। आद्ये ब्रह्मणोऽशरीरत्वात् तस्य जन्यज्ञानं नास्ति।। द्वितीये यद् ज्ञानं तन्मनोजन्यमिति न्यायेन तस्य नित्यत्वञ्च नास्तीति ब्रह्मणः सर्वज्ञत्वसिद्धिविषये इदं बाधकं भवतीति न युक्त्या ब्रह्मणः सर्वज्ञत्वम्।। तस्मादतीन्द्रियार्थे श्रुतिरेव शरणं श्रुत्यर्थसम्भावनार्थत्वेनाऽनुमानं युक्तिमात्रं न स्वतन्त्रमिति भावः।। ब्रह्मणः जगत्कर्तृत्वं सर्वज्ञत्वञ्च "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तदब्रह्मेति" (तै. उ * 3. 1) "यस्सर्वज्ञस्सर्ववित् (मु. उ. * 1. 1. 10ः इत्याद्यबाधितश्रुतिभिरवगन्तव्यम्।।

ब्रह्मणः स्वरूपलक्षणम्

सूत्रगत 'यत': शब्देन ब्रह्मणः स्वरूपलक्षणमप्युच्यते।। अत्र भगवत्पादैरुक्तं यत इति कारणनिर्देशः इति।। अत्र रत्नप्रभाकारैः "यच्छब्देन सत्यं ज्ञानमनन्तमानन्दरूपं वस्तूच्यते "आनन्दाद्धेव" (तै. उ. * 3. 6) इति निर्णीतत्वात्. तथा च स्वरूपलक्षणसिद्धिरिति मन्तव्यम्" इति स्वरूपलक्षणं साधितम्।। [15] स्वरूपमेव लक्षणं स्वरूपलक्षणम् यथा सत्यज्ञानादिकं ब्रह्मणः इति प्रगेवोक्तम्।।

"सत्यं ज्ञानमनन्तं ब्रह्म" इति वाक्ये सत्यादिपदानि तद्विरूद्धधर्मव्यावर्तनपराणि।। न तु तेषां पदानां कस्यचिदनुवर्तमानस्य धर्मस्य प्रदर्शने तात्पर्य्यम्।। तथा च सत्यज्ञानादिपदैरखण्डमेव ब्रहम प्रतिपाद्यते।। सत्यमिति यद् रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत्सत्यम्।। अतः सत्यं ब्रह्मेति ब्रह्म विकारान्निवर्तयति।। अतः कारणत्वं प्राप्तं ब्रह्मणः।। कारणस्य च कारकत्वं वस्तुत्वान्मृद्वदचिद्रूपता च प्राप्ता अत इदमुच्यते ज्ञानं ब्रह्मेति।। अत्र भावसाधनो ज्ञानशब्दः न तु ज्ञानकर्तृ। ततः ज्ञानं ब्रह्मेति कर्तृत्वादिकारक निवृत्यर्थं मृदादिवदचिद्रूपता निवृत्यर्थञ्च प्रयुज्यते।। ज्ञानं ब्रह्मेति वचनात्प्राप्तं अन्तवत्वं, लौकिकस्य ज्ञानस्य अन्तवत्वदर्शनात्।। अतः तन्निवृ–त्यर्थमनन्तपदम्।। अन्तः परिच्छेदः अभावः इति पर्यायः।। अभावश्च त्रिविधः देशतः कालतो वस्तुतश्च।।

देशातोऽभावोऽत्यन्ताभावः यथा घटस्य भूतलादौ, कालतोऽभावः प्रागभावः प्रध्वंसाभावश्च यथा घटादेः प्राक्काले उत्तरकाले चाभाव।। वस्तुतोऽभावश्च वस्तुप्रतियोगिकान्योन्याभावः यथा पटादौ घटस्य।। तथा च प्रकृते ब्रहमपदसमानाधिकरणेन अनन्तपदेन न विद्यतेऽन्तो यस्येति व्युत्पत्या ब्रहमपदार्थस्य त्रिविधोप्यभावो व्यवच्छिद्यते।। तत्र देशकृताभावनिषेधेन ब्रह्मणो विभुत्वं लभ्यते।। कालकृताऽभावनिषेधेन तस्य नित्यत्वं लभ्यते वस्तुकृताभावस्यभेदनिषेधेन तस्य सर्वजगदभिन्नत्वस्य सर्वात्मकत्वं लभ्यते।।

ब्रहम सकलजगत्कारणमपि निर्विकारम् "अशब्दमस्पर्शमरूपमव्ययम्"(क. उ. * 3. 15) "साक्षी चेता केवलो निर्गुणश्च" (श्वे. उ. * 6. 11) इत्यादिश्रुतेः।। पूर्णे वस्तुनि कयापि क्रियया किमपि न परिवर्तनं सम्भवतीति तस्य निर्गुणत्वनिष्क्रियत्वविषये न काऽपि विप्रतिपत्तिः।।

अपि च उपनिषदः " तदेतदब्रहमापूर्वमनपर मबाहयमनन्तरम्" इत्यादिवाक्यैः ब्रहम वर्णयन्ति।। (बृ. उ. * 2. 5. 19) अत्रैतत्पदेनाऽपरोक्षत्वं, अपूर्वमित्यनेन कारणशून्यत्वं अनपरमित्यनेन कार्यरहितत्वं, अनन्तरमित्यनेनैकरसत्वम्, अबाहयमित्यनेनाऽद्वितीयत्वञ्च ब्रहमणः सिध्यन्तीति रत्नप्रभा।।[16] किञ्च भगवत्पादैः ब्रह्मणः नित्यशुद्धबुद्ध मुक्तस्वभावत्वं ब्रहमपदव्युत्पत्त्यैव सिध्यती त्युक्तम्।। तथाहि – बृंहणात् ब्रहम इति व्युत्पत्या देशकालवस्तुतः परिच्छेदाभावरूपं नित्यत्वं प्रतीयते।। अविद्यादिदोषशून्यत्वं शुद्धत्वम् जाड्यराहित्यं बुद्धत्वम् बन्धकालेऽपि स्वतो बन्धाभावो मुक्तत्वञ्चेति व्याख्यातं रत्नप्रभायाम्।।[17]

ननु ब्रहमणः तटस्थलक्षणं "यतो वा इमानि भूतानि जायन्ते" इत्यादि श्रुत्या उक्तं चेत्तर्हि स्वरूपलक्षणं किमिति शंकायामुच्यते।।

"आनन्दाद्धेव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्तीति" (तै. उ. * 3. 6)

एतावता ब्रहमणः स्वरूपतटस्थलक्षणकथनेन तस्य जिज्ञास्यत्वञ्चोपपद्यते इतीदं जन्माद्यधिकरणम्।।

# रत्नप्रभाविमर्शे षष्ठोऽध्यायः

## शास्त्रयोनित्वाधिकरणम्

"अथातो ब्रहमजिज्ञासा" इति प्रथमसूत्रेण ब्रहमणः जिज्ञास्यत्वमुक्तम्।। ततो "जन्माद्यस्य यतः" इति द्वितीयेन सूत्रेण जिज्ञास्यब्रहमणः लक्षणं प्रदर्शितम्।। तत्र जगत्कारणत्वेन ब्रहमणः सर्वज्ञत्वमुक्तम्।। ब्रहमणः सर्वज्ञत्वं न केवलं जगत्कारणत्वेन, अपि तु वेदकर्तृत्वेनाऽपि तत्सम्भावयितुमिदं शास्त्रयोनित्वाधिकरणमारब्धम्।।

अथवा वेदानाम् नित्यत्वे ब्रहमणः वेदकर्तृत्वाभावात् सर्वज्ञत्वं न सिध्यति।। अतो वेदहोतुत्वेनापि ब्रहमणः सर्वज्ञत्वसाधनायेदमधिकरणमारब्धमिति रत्नप्रभा।।

शास्त्रस्य योनिः शास्त्रयोनिः तस्माच्छास्त्रयोनित्वात्। शास्त्रं योनिः यस्य शास्त्रयोनिः तस्माच्छास्त्रयोनित्वादित्यन्वयसहितमिदं सूत्रं वर्णकद्वयात्मकं सत् ब्रहमणः लक्षणपरत्वेन प्रमाणपरत्वेनचान्वेति।।

"अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदः" (बृ. उ. * 2. 4. 10) इति सूत्रस्यास्य विषयभूतं वाक्यम्।।

ब्रहम वेदस्य कर्ता भवति वा न वेति सन्देहः।।

"वाचा विरुपनित्यया" इत्यादिश्रुत्या "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा, आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः" इत्यादि स्मृत्या च श्रुतीनां (वेदानां) नित्यत्वात् न ब्रहमणः वेदकर्तृत्व ततस्तस्य न सर्वज्ञत्वमिति पूर्वपक्षः

"अस्य महतो भूतस्य" इत्यादि श्रुत्या ब्रहमणः वेदकारणत्वम्।। यथा अप्रयत्नेनैव निश्वासकर्तृकत्वं जीवस्य तथा वेदकर्तृत्वं ब्रहमणः सर्वे वेदाः ब्रहममुखादाविर्भूताः इत्यर्थः।। तथा च एतादृश वेदकर्तृकत्व सर्वज्ञस्येश्वरस्य सिध्यत्येवेति सिद्धान्तः।। अपि च पूर्वकल्पीयस्यैव वेदस्य ब्रहमणा निश्वसितरुपेण प्रकटितत्वात् न वेदस्य नित्यत्वक्षतिः।। अत्र न केवलं

जगत्कारणत्वेन किन्तु वेदकारणत्वेनाऽपि ब्रहमणः सर्वज्ञत्वम्।।

"ब्रहमणः वेदकारणत्वम्"- ब्रहमणः जगत्कारणत्वं पूर्वाधिकरणे निरूपितम्।। इदानीं वेदकारणत्वं निरूप्यते।।

शास्त्रस्य योनिः शास्त्रयोनिः तस्माच्छास्त्रयोनित्वात्।। अत्र शास्त्र पदेन वेदोऽभिधीयते।। ब्रहम तावत् ऋग्वेदादिशास्त्रस्य कारणं भवति।। वेदस्तु पुराणन्यायमीमांसाधर्मशास्त्रैः, शिक्षाकल्पव्याकरणच्छन्दोज्योतिषादिषडङ्गैः उपकृत.।। अपि चायं वेदः वैदिकविषयाणां तथैव लौकिकविषयाणाञ्चाकरः।। अतो ग्रन्थतोऽर्थतश्चाऽपि वेदो महानेव।। किञ्च हितशासनात् तस्य शास्त्रत्वमुपपद्यते।। मन्वादिभिः शिष्टैः परिगृहीतत्वात् वेदस्य प्रामाण्यं सूच्यते।। तथा चायं वेदः सर्वार्थप्रकाशनशक्तिमान्।। किन्तु सर्वार्थप्रकाशनशक्तिमत्वेऽपि अचेतनत्वात् बोधृत्वाभावाच्चा सर्वज्ञकल्पत्वमेवोपपद्यते वेदस्य।। एतादृश महत्वविशिष्टस्य सर्वज्ञकल्पस्य च वेदस्य कारणत्वेन ब्रहमणः सर्वज्ञत्वम्।। उपादाने तच्छक्तिं विना कार्ये तदयोगात् वेदोपादानस्य ब्रहमणः- सर्वज्ञत्वम्।।

अपि च लोके यः यत्करोति सः ततोप्यधिकतरविज्ञानवान् सन्दृश्यते।। उपपद्यते हि किल रामायणप्रणेतुर्वाल्मीकेः ततोऽप्यधिकतरविज्ञानवत्वम्।। एवमेवात्रापि पूर्वोक्तगुणविशिष्टस्य सर्वज्ञकल्पस्य वेदस्य कारणत्वेन ब्रहमणः सर्वज्ञत्वमुपपन्नमेव।। किञ्च तादृशगुणविशिष्टं वेदं अप्रयत्नेन लीलयैव करोतीति ब्रहमणः सर्वज्ञत्वम्।। अत्रोक्तं भामत्याम् - देवर्षयो हि महापरिश्रमेण यत्र अशक्ताः तदीयमप्रयत्नेन लीलयैव करोतीति निरतिशयमस्य सर्वज्ञत्वं सर्वशक्तित्वञ्चोक्तं भवति इति।। 1

उदयनाचार्यैः न्यायकुसुमाञ्जलौ ईश्वरः अनुमानेनैवं साधितः।।

"कार्यायोजनधृत्यादेः
पदात् प्रत्ययतः श्रुतेः
वाक्यात् संख्याविशेषाच्च
साध्यो विश्वविदव्ययः" इति।।

अत्र 'श्रुते': इत्यनेन वेदं प्रति कारणत्वमभिप्रेतं, ईश्वरस्य।। श्रुतिरपि "अस्य महतो भूतस्य" इत्यादि ब्रहमणः वेदकर्तृत्वं प्रतिपादयति।।

अत्रेयमाशंका।।ब्रहमणः वेदं प्रति कारणत्वे वेदानां नित्यत्वं कथमिति।। किञ्च ब्रहमणः वेदकर्तृत्वे वेदानामपौरुषेयत्वं कथमिति तस्याभिप्रायः।।

अत्रापौरुषेयत्वं नाम किमिति विचारणीयम्।। मीमांसकाः "वेदास्याध्यायनं सर्वं गुर्वध्ययनपूर्वकम्" इत्यादि नियममनुसृत्य वेदस्यानादित्वं मन्वते।।ते सृष्टिप्रलयमनिच्छन्तः वेदाध्ययनं प्रति अस्मादृशगुरुशिष्यपरम्परामविच्छिन्नामिच्छन्ति।। वेदञ्चानादिमाचक्षन्ते।। परम्परायाः अनादित्वाद्वेदस्याप्यनादित्वम्।।तेषाञ्च मतेऽपौरुषेयत्वं नाम पुरुषास्वातन्त्र्यमेव।। वेदान्तिनस्तु "धाता यथा पूर्वमकल्पयत्" इत्यादिश्रुतिभिः, परमेश्वरः पूर्वकल्पीयं वेदं स्मृत्वा अनन्तरकल्पे कृतवानिति वदन्तः परमेश्वरस्यापि तेषु स्वातन्त्र्यं नाऽस्तीत्यभ्युपगच्छन्ति।। उक्तञ्च स्वयं गीताचार्यैः।।

"वेदैश्च सर्वैरहमेव वेद्यः
वेदान्तकृत् वेदविदेव चाऽहम्" इत्यादि।।[2]

अत्र वेदान्तकृत् वेदान्तार्थसम्प्रदायकृत् इत्यर्थः।। वेदवित् वेदार्थविदित्यर्थः इति भाष्ये भगवत्पादाः।। तथा च परमेश्वरः केवलं वेदस्य वेत्तैवेति न तु कर्तेति ज्ञायते।। अपि च वेदस्यापौरुषेयत्वविषये रत्नप्रभाकाराणामयमभिप्रायो यत् यत्र ह्यर्थज्ञानपूर्वकं वाक्यज्ञानं वाक्यसृष्टौ कारणं तत्र पौरुषेयता। अत्र विचित्रगुणमाया सहायोऽनावृतानन्त स्वप्रकाश चिन्मात्रः परमेश्वरः स्वकृतपूर्वकल्पीयक्रमसजातीय क्रमवन्तं वेदराशिं तदर्थांश्च युगपज्जानन्नेव करोतीति न पौरुषेयता वेदस्य। तथा च वेदोऽपौरुषेय एवेति।[3]

## ब्रहमणः वेदवेद्यत्वम्

इदानीं सूत्रस्य द्वितीयेन वर्णकेन ब्रहमणः शास्त्रप्रतिपाद्यत्वं साध्यते

। तथा हि –

शास्त्रं योनिः यस्य सः शास्त्रयोनिः तस्माच्छास्त्रयोनित्वात् ।

"तं त्वौपनिषदं पुरुषं पृच्छामि" (बृ.उ. 3.9.26) इति श्रुतिवाक्यमत्र विषयः।

ब्रह्म केवल शास्त्रप्रमाणेनैव ज्ञायते उत अन्यैः प्रमाणैरपि वा इति संशयः

घटवत् ब्रह्म प्रत्यक्षादि प्रमाणैरपि ज्ञातुं शक्यते इति पूर्वपक्षः

रूपादिहीनं ब्रह्म प्रत्यक्षादिप्रमाणैः न ज्ञातुं शक्यते, किन्तु केवलेन श्रुति प्रमाणेनेति सिद्धान्तः ।

ब्रह्म तावत् शास्त्रेणैव प्रमाणेन ज्ञातुं शक्यते न प्रत्यक्षेण रूपादिहीनत्वात् नाऽप्यनुमानेन सादृश्याभावाच्च । ब्रह्मणः प्रत्यक्षादिप्रमाणाऽविषयत्वे "यतो वाचो निवर्तन्ते अप्राप्यमनसा सह" (तै.उ 2.4) "यन्मनसा न मनुते" (क.उ 3.5)

इत्यादि श्रुतयः प्रमाणम् । किञ्च ब्रह्मणोऽस्तित्वे किं प्रमाणमिति चेत् वेद एव प्रमाणम् ।

सर्वे वेदाः मुक्तकण्ठं परमेश्वरमेव प्रतिपादयन्तीति ब्रह्मणः वेदवेद्यत्वम् । उक्तञ्च गीतायाम्–

"वेदैश्च सर्वैरहमेव वेद्यः" (भ.गी 15.15) इत्यादि । अतो ब्रह्मणः वेदवेद्यत्वात् शास्त्रयोनित्वमुपपद्यते । तच्च शास्त्रयोनित्वं वेदान्तवाक्यसमन्वयेनैव गृह्यते इति समन्वयाधिकरणमारब्धं भगवत्पादैः।



# रत्नप्रभाविमर्शे सप्तमोऽध्यायः

## समन्वयाधिकरणम्

मोक्षसाधनीभूतब्रह्मज्ञानाय श्रवणात्मकवेदान्तविचारः कर्तव्यः इति प्रथमसूत्रेणोक्तम् । द्वितीयसूत्रेण विचारणीयब्रहमणः लक्षणादिकमुक्तम् । तस्य ब्रहमणः जगत्कारणत्वेनाऽर्थानुलब्धं सर्वज्ञत्वं शास्त्रप्रमाणकत्वञ्च तृतीयसूत्रेणोक्तम् । तच्च शास्त्रप्रमाणकत्वं ब्रहमणः कथमित्याशंकायां ब्रहमप्रतिपादकैः वेदान्ताभिधैर्वेदभागैः ब्रहम प्रतिपाद्यते इति वेदान्तानां समन्वयः कर्तव्यः इति तदर्थं समन्वायाधिकरणमारभ्यते ।

अस्याधिकरणस्य मूलभूतं सूत्रं "तत्तु समन्वयात्" इति ।

किन्तु तद्ब्रहम वेदान्तात् स्वातन्त्र्येणैवावगम्यते न तु कर्तृदेवतादि प्रतिपादनद्वारा कर्मशेषतया उपासनाङ्गतया वा इति सूत्रस्यास्य सारभूतोऽर्थः।

"सदेव सोम्य इदमग्र आसीत्" (छा. उ. 6.2.1)

"सत्यं ज्ञानमनन्तं ब्रहम" (तै.उ.2.1.1) इत्यादीनि विषयवाक्यानि।

वेदान्तानि कर्तृदेवतादिप्रतिपादनद्वारा कर्माङ्गतया ब्रहम प्रतिपादयन्ति उत स्वातन्त्र्येण वा इति संशयः

वेदान्तानि साक्षाद्ब्रहम न प्रतिपादयन्ति तत्प्रतिपादने पुरुषार्थाभावात्, किन्तु परम्परया कर्मापेक्षितकर्तृदेवतादिप्रकाशनार्थत्वेन ब्रहम प्रतिपादयन्ति इति पूर्वपक्षः ।

वेदान्तवाक्यानि कर्मकाण्डान्तर्भूतानि न भवन्ति किन्तु तद्भिन्नान्येव । अपि च वेदान्तानि उपक्रमादिषड्विधलिङ्गैः ब्रहमैव प्राधान्येन (तात्पर्येण) प्रतिपादयन्ति । किञ्च तत्प्रतिपादनेनाऽनर्थनिवृत्तिरूपप्रयोजनस्य सत्वात् तन्न व्यर्थं भवतीति सिद्धान्तः

पूर्वसूत्रद्वितीयवर्णकेन (शास्त्रं योनिः यस्य शास्त्रयोनिः तस्माच्छास्त्रयोनित्वात्) आक्षेपस्य सत्वादाक्षेपसङ्गतिः ।

द्वितीयवर्णके –

कृत्स्नवेदान्तशास्त्रमधिकरणस्य विषयः ।

वेदान्तानि "आत्मा वा अरे द्रष्टव्यः" इत्यादीनि किमुपासनाविधिं बोधयन्ति उत ब्रह्मसाक्षात्कारे वा तेषा तात्पर्यमिति संशयः ।

"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति नियमेन कृत्स्नस्य वेदस्य विधिपरत्वात्, वेदान्त वाक्येष्वपि "श्रोतव्यो मन्तव्य" इत्यादि वाक्येषु च विधिदर्शनात् 'श्रोतव्य' इत्यादि वाक्यानि उपासनाविधायकानि इति पूर्वपक्षः" ।

यत्कर्त्रधीनं न भवति तस्मिन् विधिर्न सम्भवति । वेदान्तेषु 'दशमस्त्वमसि' इत्यादि सिद्दवस्तुबोधकान्यपि वाक्यानि सन्ति। शाब्दबोधनात् प्राक् प्राप्तस्यासंभावना – विपरीतभावनयोर्निवृत्तये व्यापाररुपकर्तृतन्त्रमनननिदिध्यासनाना विधानम् । परन्तु एतेषा तात्पर्यं सिद्धवस्तुनि ब्रहमण्येव । तदुक्तं लघुवार्तिके –

"न प्रतीचिब्रहमदृष्टिं विधत्ते तत्वमादिगी .

नाऽप्युपास्तिविधेश्शेषं ब्रहमात्मैक्यं प्रमापयेत्" इत्यादि ।[1]

पूर्वाधिकरणादत्र प्रसङ्गसङ्गतिः ।

अस्मिन् समन्वयाधिकरणे ब्रहमण· शास्त्रप्रमाणकत्वे भाट्टमीमांसकानां पूर्वपक्षः तत्खण्डनम्, वृत्तिकारपूर्वपक्षः तन्निरासः, प्राभाकरमीमांसकानां पुर्वपक्ष· तन्निराकारणं मोक्षस्वरुपादिकञ्च विवृतानि भाष्यकारैः । ब्रहमनास्तिकत्वे तुल्येऽपि भाट्टमते सिद्धे पदानां शक्तिः प्राभाकरमते कार्यान्विते शक्तिः । कार्यान्वितार्थे शक्तितौल्येऽपि वृत्तिकारमते ब्रहमास्तित्वाङ्गीकारेण मतत्रैविध्यामिति विज्ञेयम् ।

मीमांसकेषु साम्प्रदायद्वयं वर्तते भाट्टसाम्प्रदायः प्राभाकरसाम्प्रदायश्चेति । तत्र भाट्टाः अभिहितान्वयवादिनः । प्राभाकरास्त्वन्विताभिधानवादिनः । उभावपि कर्मप्राधान्यवादिनाविति कर्ममीमासकावेव ।पदेभ्यः प्रतिपन्नानां पदार्थाना संसृष्टपरस्परार्थान्वयबोधनमभिहितान्वयो नामेति विवरणाचार्या : ।[2] एतन्मते प्रत्येकं तत्तदर्थेषु गृहीतशक्तिकान्येव पदान्याकांक्षादिसहकृतया तत्तत्पदवृत्त्यैव शक्त्या लक्षणया वा परस्परान्वितं विशिष्टार्थं बोधयन्ति। विशिष्टार्थबोधनेऽतिरिक्ताया.

वाक्यशक्तेः अपेक्षा नास्तीति भावः। अयमेव वाक्यार्थबोधः शब्दबोधः इति चोच्यते। किञ्च "ज्योतिष्टोमेन स्वर्गकामोयजेत" इत्यादौ तप्रत्ययः प्रकृत्यर्थोपरक्तां भावनामभिधत्ते इति सिद्धे व्युत्पत्तिमिच्छतां भाट्टाचार्याणां सिद्धान्तः।

प्रकृते ब्रह्मणः शस्त्रयोनित्वविषये भाट्टाः पूर्वपक्षं कुर्वन्ति। तेषामाशयः "कथं पुनः ब्रह्मणः शास्त्रयोनित्वमुपपद्यते" इत्यारभ्य "तस्मान्न ब्रह्मणः शास्त्रयोनित्वमित्यन्तमनूदितं भगवत्पादैः। तेषामभिप्रायसारांशोऽस्माभिः प्रपञ्चीक्रियते तथाहि –

ब्रह्मणः शस्त्रयोनित्वं नोपपद्यते। तथाहि – प्रवृत्तिनिवृत्तिपरं हि शास्त्रम्। उक्तञ्च।

"प्रवृत्तिर्वा निवृत्तिर्वा
नित्येन कृतकेन वा
पुंसां येनोपदिश्येत
तच्छास्त्रमभिधीयते" इति

तद्यथा – "अहरहस्सन्ध्यामुपासीत"
"यजेत स्वर्गकामः"
"न कलञ्जं भक्षयेत्"
"नाऽनृतं वदेत्" इति

विधिप्रतिषेधात्मकं शास्त्रमुपलभ्यते। तत्सन्निहित अर्थात् विधिसन्निहितार्थवादवाक्यानां विधिवाक्यैकवाक्यत्वं सम्पाद्य प्रामाण्यं निर्वाह्यते। "स्वाध्यायोऽध्येतव्यः" इति अध्ययनविधि गृहीतस्य सर्वस्यापि वेदस्य प्रामाण्यमवश्यं सम्पादनीयम्। "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्"[3] तस्मादनित्य उच्यते" इति जैमिनीयं सूत्रम्। तस्यार्थः

आम्नायस्यवेदस्य क्रियार्थत्वात्=कार्यपरत्वात्, अतदर्थानाम् = अक्रियाबोधकपदानां, आनर्थक्यं=अप्रामाण्यं तस्मादनित्यमुच्यते इति पूर्वपक्षसूत्रमिदम्। तत्र "दृष्टोहि तस्यार्थः कर्मावबोधनम्" तस्य =वेदस्य, अर्थः = प्रयोजनं यत्कर्मावबोधनं = कर्तव्यबोधनमेव॥ एतदर्थबोधक

शाबरभाष्यञ्च वेदस्य प्रवृत्तिनिवृत्तिपरत्वमेव बोधयति।। तत्र सिद्धान्तसूत्रम् – "विधिनात्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः" [4] इति।। विधीनाम् विधेयानां स्तुत्यर्थेन विधिना = विधिवाक्येन एकवाक्यत्वात् एकविशिष्टार्थबोधकत्वात् स्युः अर्थवादाः सफला. स्युः इति।। तथा च अर्थवादानां विधेयस्तावकत्वेनैव प्रमाण्यं सम्पाद्यते।। न तु सम्बन्धमन्तरेणार्थवादानां प्रामाण्यं सम्भवति।।यथा – "वायव्यं श्वेतमालभेत भूतिकामः" इति विधिवाक्यसन्निहितानां, "वायुर्वै क्षेपिष्ठा देवता" इत्यादीनामर्थवादानां विधिवाक्यैकवाक्यत्वं पूर्वपक्षग्रन्थे भगवत्पादैरपि प्रदर्शितम्।।एवं 'बर्हिषि रजत न देयम्' इति निषेधवाक्यसमीपस्थं "सोऽरोदीत्" "यदरोदीत्" इत्यादि निन्दार्थवाक्यानां निषेध्यनिन्दापरत्वेन प्रामाण्यं सम्पाद्यते।। तथा च " सत्य – ज्ञानमनन्त ब्रहम " "आत्मैवेदं सर्वम्" " ब्रहमैवेद सर्वम्" "नित्यं विज्ञानमानन्दं ब्रहम" "तरति शोकमात्मवित्" "ब्रहमविदाप्नोति परम्" "तत्वमसि" "प्रज्ञानं ब्रहम" इत्यादि वेदान्तवाक्येषु पूर्वं वा परं वा विधिर्नोपलभ्यते।। तथा च विधिसम्बन्धविरहितानामेतेषां वेदान्तवाक्यानां प्रवृत्तिनिवृत्तिफलत्वाभावात् केवलसिद्धबोधकत्वेन प्रमाण्यं न सम्भवति।। अतः एतेषा वाक्यानां प्रमाण्यसम्पादनाय देहेन्द्रिय सघातातिरिक्तात्मज्ञानं प्रवृत्तौ निवृत्तौ चोपयुज्यते।। तथाहिः – देह एव चेदात्मा आमुष्मिकफलप्रदकर्मणि न प्रवर्तते।।देहस्य नाशेन देहस्याऽऽत्मनो नष्टत्वात्।। कालान्तरभाविस्वर्गभोक्तृत्वं तस्य न सम्भवतीति तादृशकर्मसु न प्रवर्तेत ।। एवं कालान्तरभावि नरकदुःखप्रद निषिद्धकर्मभ्यः न निवर्तेत।। अतः विहितकर्मप्रवृत्यर्थं निषिद्धकर्मनिवृत्यर्थं देहेन्द्रियसंघातातितिक्तस्यात्मनो ज्ञानमावश्यकम्।। तथा च 'आत्मा वा अरे द्रष्टव्यः' इत्यत्र आत्मा देहेन्द्रियातिरिक्तत्वेन द्रष्टव्यः इत्यर्थो वक्तव्यः।।"ब्रहमविदाप्नोति परम्" इत्यादिकं स्तावकं, आत्मज्ञानं स्तावकमेवेति वक्तव्यम्।। एवञ्च शास्त्रप्रमाणकत्वं ब्रहमणः न सम्भवतीति पूर्वपक्षे प्राप्ते तत्समाधानार्थं "तत्तु समन्वयात्" इतिसूत्रं प्रवृत्तम्।।

सूत्रादबहिरेव पूर्वपक्षमाकलय्य सिद्धान्तप्रदर्शनार्थमेवेतत्सूत्रमिति

वक्तव्यं तत्तु समन्वयादिति।। अत्र विवृतं भाष्यकारैः– तु शब्दः पूर्वपक्षव्यावृत्यर्थः।। तद् ब्रहम सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते।। कथं ? समन्वयात् इत्यादि।।[5] अत्र भाष्यगतसमन्वयशब्दः एवं व्याख्यातः रत्नप्रभाकारै.।। तथा हि.– सम्यगन्वयः समन्वयः।। अन्वयो नाम तात्पर्यविषयत्वम्।। तात्पर्यस्य सम्यक्त्वमखण्डार्थ विषयकत्वमित्यादि।।[6]

तथा च उपक्रमोपसंहारादिषड्विधैः तात्पर्यनिर्णायकैः लिङ्गैरखण्डमेव ब्रहम बोध्यते इति षड्विधलिङ्गोपेततात्पर्य विषयत्वादखण्डं ब्रहम वेदान्तप्रमाविषय इत्यर्थस्सिध्यति।। एवञ्च वेदान्तानामखण्डार्थ बोधकत्वमुपक्रमोपसंहारादि षड्विधलिङ्गैः निरुपितं रत्नप्रभायाम्।। तथाहि –

उपक्रमोपसंहारा
वभ्यासोऽपूर्वता फलम्
अर्थवादोपपत्ती च
लिङ्गं तात्पर्यनिर्णये इति च षड्विधलिङ्गानि।।

अत्र उपक्रमोपसंहारावेकं लिङ्गम्।। ताभ्यां विचार्यवाक्यस्य आद्यन्तभागयोरोकार्थपर्यवसान लभ्यते।। तदुक्तम् – "प्रकरणप्रतिपाद्यस्य तदाद्यन्तयोरुपपादनमुपक्रमोपसंहारौ" इति।।[7] अत्र "सदेव सोम्य" इत्युपक्रमः "ऐतदात्म्यमिदं सर्वम्" इत्युपसंहारः।। तथाहि – छान्दोग्ये उद्दालकः पुत्रमुवाच हे सोम्य प्रियनन्दन !इदं सर्वं जगत् अग्रे उत्पत्तेः प्राक्काले सदबाधितं ब्रहमैवाऽऽसीत्।। इति।। अत्रैवकारेण जगतः पृथक्सत्ता निषिध्यते।। सतः सजातीयविजातीयस्वगतभेद निरासार्थं "एकमेवाद्वितीयम्" इति पदत्रयम्।। एवमद्वितीयं ब्रहमोपक्रम्य " ऐतदात्म्यमिदं सर्वम्" (छा. उ * 6. 8. 7. 16) इत्युपसंहरति।। इदमुपक्रमोमसंहारैकरूप्यं तात्पर्यलिङ्गम्।। तात्पर्यविषयत्वेन सन्दिग्धानां बहूनां मध्ये यस्मिन्नेवाद्यन्तभागयोः पर्यवसानं तस्मिन्नेव तात्पर्यनिर्णयः इति विज्ञेयम्।।

अभ्यासो नामानन्यपरं पुनः श्रवणम्।।उक्तञ्च – प्रकरणप्रतिपाद्यस्य

वस्तुनः तन्मध्ये पौनः पुन्येन प्रतिपादनमभ्यासः इति।।[8] वेदान्ते आदरज्ञापनद्वारा तस्य तात्पर्यज्ञापकत्वम्।।तदुक्तं वाचस्पतिमिश्रैः– अभ्यासे हि भूयस्त्वमर्थस्य भवति यथा अहो दर्शनीया, अहोदर्शनीया इति।। [9] प्रकृते अद्वितीयवस्तुनि प्रतिपाद्यमाने मध्ये तत्वमसीति [10] नवकृत्वप्रतिपादनमभ्यासः।। अत्र तत्पदेन सर्वज्ञत्वविशिष्टचैतन्यपरमेश्वरो वाच्यः।। त्वम् पदेन च किञ्चिज्ञत्वविशिष्टचैतन्यो जीवो वाच्यः।।तत्रोभयोस्सामानाधिकरण्याभावात् तत्साधनार्थं जहदजहल्लक्षणा आश्रयणीया।।तथा चात्र सर्वज्ञत्वकिञ्चिज्ञत्वांशे जहल्लक्षणा, चैतन्यांशे अजहल्लक्षणा चेति तयोस्सामानाधिकरण्यसिद्धिः।। एतदेवाभिप्रेत्योक्तं विधारण्यश्रीचरणैः–

तथाहि – तत्वमस्यादिवाक्येषु
लक्षणाभागलक्षणा
सोऽयमित्यादिवाक्यस्थ
पदयोरिव नापरा इति।। [11]

अपूर्वता नाम प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः प्रमाणान्तराविषयीकरणम्।। [12] अत्र वेदान्ते रूपादिहीनस्याऽद्वितीयब्रह्मणः अन्यप्रमाणगोचरत्वाभावात् केवलेनोपनिषत्प्रमाणेन गोचरत्वाच्चापूर्वत्वम्।।

फलं नाम प्रकरणप्रतिपाद्यस्यात्मज्ञानस्य तदनुष्ठानस्य वा तत्र तत्र श्रूयमाणप्रयोजनम्।। [13] वेदान्ते " अत्र वा व किल तत्सौम्य न निभालयसे" इत्यादि।। संघाते स्थितं प्रत्यक्ब्रह्म न जानासीत्यर्थः।। 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' (छा. उ. * 6. 14. 2) इति ब्रह्मज्ञानात् मोक्षरूपं फलमुक्तं विदुषः।। तत्रेदं रत्नप्रभाविवरणम्।। तथाहि – तस्य यावत्कालं देहो न विमोक्ष्यते तावदेव देहपातपर्यन्तो विलम्बः।। अथ देहपातानन्तरं विद्वान् ब्रह्म सम्पत्स्यते विदेहकैवल्यमनुभवतीत्येतदेवात्र फलम्।। [14]

अर्थवादो नाम प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनम्।। [15] अत्र वेदान्ते प्रकरणप्रतिपाद्यस्य ब्रह्मणः प्रतिपादनं पुनः "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य"

इत्यादिषु स्थलेषु कृतमित्येतदर्थवादः।। अत्र ब्रह्मणोऽद्वितीयप्रतिपादकत्वमर्थवादे प्रयोजनम्।।

उपपत्तिर्नाम उक्तधीविषयस्याबाधितत्वम्।। अत्रोक्तं वेदान्तसारे – प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणयुक्तिरुपपत्तिः।।[16] प्रकरणेऽस्मिन् "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छा. उ. * 6. 1. 4) इत्यादि मृदादिदृष्टान्तैः प्रकृत्यतिरेकेण विकारो नास्तीत्युपपत्तिरुक्ता।।

एवमेव "आत्मा वा इदमेक एवाग्र आसीत्" (ऐत. उ. 2. 1. 1. 1) "तदेतदब्रह्मापूर्वमनपरमनन्तरमबाह्यम्" "अयमात्मा ब्रह्मसर्वानुभूः" (बृ. उ. 2. 5. 19)" ब्रह्मैवेदं पुरस्तात्" (मु. उ * 2. 2. 11) इत्यादि वाक्येष्वपीत्यवगन्तव्यम्।। अत्र ऐतरेयबृहदारण्यकछान्दोग्यमुण्डकोपनिषदः क्रमेण ऋग्यजुस्सामाथर्वणान्तर्गता इति अखण्डमेव ब्रहम प्रतिवेदान्तं समर्प्यते इति ज्ञातव्यम्।। एवञ्च वेदान्तानां षड्विधतात्पर्यलिङ्गैरखण्डमेव ब्रहम बोध्यते इति न युक्तं तेषां कार्यार्थत्वं कल्पयितुं यस्मिन् शब्दस्य तात्पर्यं स एव शब्दार्थः यत्परश्शब्दस्सशब्दार्थ इति न्यायादित्युक्तं रत्नप्रभाकारैः।।

अपि च यद्यपि "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति " विधिनात्वेवाक्यत्वात्" इत्यादि च सूत्राणि प्रवृत्तिनिवृत्तिपरत्वेनैव वेदस्य सार्थक्यं ब्रुवन्ति, प्रामाण्यञ्च सम्पादयन्ति, तथापि तत् धर्मजिज्ञासाविषयम्।। "अथातो धर्मजिज्ञासा" इत्यादिना कर्तव्यधर्मास्तत्र प्रतिपादिताः सन्ति।। धर्मस्तु कृतिसाध्यो भवति।। कृतिसाध्यस्य विधेयत्वं युज्यते एव।। तथा च ये ये धर्माः अधिकारिभिः कर्तव्यत्वेन विहिताः वर्तन्ते ते सर्वेऽपि विधेयाः भवितुमर्हन्ति।। ततः तद्बोधकवाक्यानां प्रवृत्तिपरत्वञ्चाप्युपपद्यते।। अतः कर्ममीमांसाशास्त्रस्य प्रवृत्तिपरत्वमस्माभिर्न निषिध्यते।। कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं लौकिकं वैदिकञ्च कर्म।। यथा अश्वेन गच्छति पद्भ्यामन्यथा वा न वा गच्छतीति।।

तथा – "अतिरात्रे षोडशिनं गृहणाति"
"नाऽतिरात्रे षोडशिनं गृहणाति"
"उदिते जुहोति" "अनुदिते जुहोति" इति भाष्ये

भगवत्पादैः कृतिसाध्यत्वं प्रदर्शितम्।। ब्रह्ममीमांसाशास्त्रे तु तत्परवेदान्तानां कार्यपरत्वं वक्तुं न शक्यते।। कुत इत्युक्तौ सिद्धे वस्तुनि विकल्पो न सम्भवति।।तथाहि – एवस्मिन् घटे अयं घटो वा घटस्स्याद्वा पटस्स्याद्वा इति विकल्पः न सम्भवति।। तथा विधिरपि न संभवति।। घटमानय घटं नय मा इति घटकर्मकानयने विधिर्वा निषेधो वा स्यात्।। किन्तु घटे घटं कुर्यात् घटं मा कुर्यात् इति विधिनिषेधाः न सम्भवन्त्येव।। तथा नित्यशुद्धबुद्धमुक्तस्वभावेऽऽत्मन्यपि।। अस्यार्थः– नित्यः नाशरहितः शुद्धः अज्ञानादिमलरहितः।। ईदृशे ब्रह्मणि विकल्प विधिनिषेधाः न सम्भवन्ति।। अतः सिद्धबोधिवेदान्ताना कार्यपरत्वेन प्रमाण्यं न सम्भवतीति, वयमपि ब्रूमः।। तथा च कथं प्रामाण्यमित्युक्तौ प्रयोजनवदर्थपरत्वं प्रामाण्यम्. अज्ञातार्थज्ञापकत्वं वा प्रमाणमिति वक्तव्यम्।। अत्र प्रयोजनञ्च महत् दृश्यते।। "तरति शोकमात्मवित्" (छा. उ. 7. 1.3)
"ब्रह्म वेद ब्रह्मैव भवति" (मु. उ. * 2. 2. 9) "सोऽश्नुते सर्वान् कामान्" (तै. उ. 2. 1. 1) इत्यादौ जन्ममरणादिबन्धप्रयुक्तशोकनिवृत्तिरुक्तं भवति।। ब्रह्मविदाप्नोतीत्यत्र 'ब्रह्मवित् सर्वान् कामान्' 'सोऽश्नुते सर्वान् कामान्' इत्युक्तौ ब्रह्मलोके यावानानन्दो वर्तते वैकुण्ठे यावानानन्दो वर्तते कैलासादौ यावानानन्दो वर्तते तान्सर्वान् आनन्दान् सहैव युगपदेव प्राप्नोतीति दर्शयति श्रुतिः।। एवं "रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति" (तै. उ. * 2. 7) इत्यादौ परमानन्दलाभं ब्रह्मविदः दर्शयति।। मानुषानन्दमारभ्य ब्रह्मानन्दपर्यन्तमान्तरिकानामानन्दानां तारतम्यमभिधाय [17] " स यश्चायं पुरुषे।। यश्चासावादित्ये।। स एकः।। स य एवं वित्" (तै. उ. * 2. 8) इत्यादिना सर्वानन्दानां स्वरूपभूतं ब्रह्मेति प्रतिपादितं दृश्यते।। एतादृशस्य महाप्रयोजनस्य श्रुतिषूपलभ्यमानत्वात्फलवदर्थबोधकत्वरूपं प्रामाण्यं निर्विवादं सिध्यति।। एवमेवाज्ञातबोधकत्वमपि सिध्यत्येव।। ब्रह्म च प्रत्यक्षादिप्रमाणैरनवगतम्।। तथा च प्रमाणान्तरानवगतब्रह्मबोधकत्वेन सिद्धबोधिवेदान्तानां प्रामाण्ये सम्भवति सति कर्ममीमांसासूत्राण्युदाहृत्य प्रवृत्तिपरत्वाभावादप्रमाण्यमिति प्रतिपादनमत्यन्तनिर्युक्तिकम्।।

यद्युभयोः पूर्वोत्तरमीमांसयोरेकशास्त्रत्वमभ्युपगम्य सिद्धबोधकत्वेन वेदान्तानां प्रामाण्यं न सम्भवति कार्यपरत्वेनैव प्रमाण्यमवश्यं वर्णनीयमित्युच्येत तर्हि " अथातो ब्रहमजिज्ञासा" इति बादरायणसूत्रस्य "अथातो धर्मजिज्ञासा" इति जैमिनिप्रणीतसूत्रस्य च एकवाक्यत्वप्रतिपादनमत्यन्तदुष्करम्।।यद्येकमेव स्याच्छास्त्रं तथा 'अथातो धर्मजिज्ञासा' इत्यक्त्वा "अथातः परिशिष्टधर्मजिज्ञासा" इति ब्रूयात्।। किन्तु तथा नोक्तम्।। तथा च द्वयोरपि मीमांसयोरेकवाक्यत्वमभ्युपगम्य विधिवाक्यैकवाक्यत्वेनैव प्रमाण्यमभ्युपगन्तव्यं न सिद्धबोधकत्वेनेति यत्प्रतिपादन तदत्यन्तनिर्युक्तिकमेव।। अत्र वेदान्तस्य पूर्वमीमांसायामनन्तर्भावत्वं स्पष्टं प्रतिपादयन्ति रत्नप्रभाकाराः।। तथाहि – यदि विधिरेव वेदार्थस्स्यात् तदा सर्वज्ञो बादरायणो ब्रहमजिज्ञासां न ब्रूयात् ब्रहमणि मानाभावात्।। अतो ब्रहमणो जिज्ञास्यत्वोक्त्या केनापि तन्त्रेणानवगतब्रहमपर वेदान्तविचारः आरम्भणीयः"

एतावत्पर्यन्तं ब्रहमैव नास्ति धर्म एव मुक्तिसाधनमिति वदतां मीमांसकानां मतं संक्षेपेण निराकृत्य, सिद्धबोधिवेदान्तानां प्रमाण्यं साधितम्।। इतः परं ब्रहमबोधकत्वेन वेदान्तानां प्रामाण्यमस्त्येव तथापि विधिशेषत्वेनैव ब्रहम समर्प्यते न तु प्राधान्येन (अनन्यशेषत्वेन) इति वदतां वृत्तिकाराणां मतं भाष्यकारोक्त दिशा विव्रियते।।

## वृत्तिकारपूर्वपक्षः

एतच्च वृत्तिकारमतं [19] "अत्रापरे प्रत्यवतिष्ठन्ते" इत्यारभ्य "तस्मात्प्रतिपत्ति विधिविषयतयैव शास्त्रप्रमाणकं ब्रहमाभ्युपगन्तव्यम्" इत्यन्तं प्रदर्शितं भाष्यकारैः।। एते वृत्तिकाराः ज्ञानकर्म समुच्चयवादिनः।। ज्ञानकर्मसमुच्चयो नाम ज्ञानस्येव कर्मणोऽपि मोक्षाङ्गत्वम्।।तेषामयमाशयः यत् यद्यपि ब्रहम शास्त्रप्रमाणकं तथापि प्रतिपत्तिविधिविषयतयैव तदभ्युपगन्तव्यमिति।।अत्रोक्तं रत्नप्रभाकारैः।।[20] "विधिर्नियोगः तस्य विषयः

प्रतिपत्तिरुपासना"इत्यादि वाक्यैः।। वृत्तिकारास्तु सर्वेषां पदानां कार्यान्वितार्थे शक्तिमभ्युपगम्य ब्रह्म तावत् विधिशेषत्वेनैव वेदान्तैः बोध्यते न स्वातन्त्र्येणेत्यभिप्रयन्ति।। तथाहि—

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य": (बृ. उ * 2. 4. 5) "सोऽन्वेष्टव्यः" (छा. उ. * 8.7.1) "आत्मानमुपासीत" इत्यादि ब्रह्मोपासनापराणि वाक्यान्युपलभ्यन्ते वेदान्तेषु तत्रोपास्यस्वरूपं प्रतिपादयतः।। यथा "यूपे पशुं बध्नाति" इति विधिवाक्यं यूपे पशुबन्धन कर्तव्यमिति बोधयति।। तद्यूपः कीदृशः इत्याकांक्षायां "यूपं तक्षति" "अष्टास्रीकरोति" इति तक्षणादिसंस्कृतं दारू यूपः इति तत्र प्रतिपादयति।। एवं यथा "आहवनीये जुहोति" [21] इत्यत्र आहवनीये होमः कर्तव्यः इति विधिवाक्येन बोध्यमाने आहवनीयः कीदृशः इत्याकांक्षाया तत्र 'अग्नीनादधीत' इत्यादानसंस्कृतोऽग्निः आहवनीय इत्युच्यते।। एवमेव "आत्मा वा अरे द्रष्टव्यः"इत्यादि स्थलेषु आत्मदर्शनं विधीयते।।तादृश विधीयमानदर्शनविषये आत्मा कीदृशः इत्याकांक्षायां "सत्यं ज्ञानमनन्तं ब्रह्म" (तै. उ. * 2. 2) "सदेव सोम्येदमग्र आसीत्" (छा. उ. * 6.2.1) इत्यादि वचनानि विधिविषयब्रह्मबोधकत्वेन प्रामाण्यमुपगच्छन्ति।। एवञ्च ब्रह्मोपासनमेव मोक्षस्य साधनमिति तत्रोपासनाविधिशेषत्वेनैव ब्रह्म बोध्यते न स्वातन्त्र्येण।।तथा च कार्यपरत्वेनैव वेदान्तानां प्रामाण्यं न सिद्धपरत्वेनेति वृत्तिकाराशयः।। अत्र धर्मादतिरिक्तं ब्रह्म नास्तीति वदतो मीमांसकादस्य वैलक्षण्यम्।। एवं पूर्वपक्षे प्राप्ते सिद्धान्तः।।

## वृत्तिकारमतखण्डनम्

सिद्धान्ते भगवत्पादाः कर्मब्रह्मविद्याफलयोर्वैलक्षण्यं प्रदर्शयन्ति।। तथाहि—

कर्म तावत् शारीरं वाचिकं मानसञ्चेति त्रिविधं श्रुतिस्मृतिसिद्धम्।।

तत्त्वस्यन्तु "अथातो धर्म जिज्ञासा" इत्यादिसूत्रैः प्रतिपादितम्।। अथ- वेदाध्ययनानन्तरम्, अतः- वेदस्य फलवदर्थपरत्वात्, धर्मनिर्णयाय कर्मवाक्यविचारः कर्तव्यः इति सूत्रस्यार्थ·।। अपि च यथा प्रवृत्तये धर्मो जिज्ञास्यः तथैवाधर्मोऽपि परिहाराय जिज्ञास्यः भवति।। धर्माधर्माद्यनुष्ठानस्य शरीरवाङ्मनोभि माननिमित्तत्वात् तत्फलमपि शरीर विशेषाद्यभिमान निबन्धमनेवानुभूते।। एवञ्च धर्मानुष्ठानफलस्य शरीरवाङ्मनोभि स्पभुज्यमानत्वं, सातिशयत्वं तारतम्यवत्वञ्च दरीदृश्यते।। तथाहि - मनुष्यादारभ्य ब्रहमान्तेषु देहवत्सु सुखतारतम्य मनुश्रूयते ।।[22] स एको मानुष आनन्दः ततश्शतगुणो गन्धर्वादीना मानन्दः (तै. उ. * 2. 8) इत्यादिश्रुतयोऽत्र प्रमाणम्।। सुखतारतम्यात् तद्धेतोर्धर्मस्य तारतम्यं गम्यते।। धर्मतारतम्याच्च अधिकारितारतम्यम्।। अपि च यागाद्यनुष्ठायिनामेव विद्यासमाधिविशेषादुत्तरेण पथा गमनम्।। केवलैरिष्टापूर्तदत्त [23] साधनैः धूमादिक्रमेण दक्षिणेन पथा गमनम्।। किञ्चैतादृशकर्मप्राप्तचन्द्रलोकेऽपि सुखस्य नश्वरत्वं "यावत्सम्पातमुषित्वा" (छा. उ. 5.10.5) इत्यादिश्रुतिभिः "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" (भ.जी * 9.21) इत्यादिस्मृतिभिः "काष्ठोपचयाज्ज्वालोपचय": इत्यादिन्यायैश्चावगम्यते।।

एतादृशं सुखदुःखात्मकं तारतम्योपेतमनित्यं संसारस्पमनुभूय प्रवर्तन्ते ब्रहमादिस्थावरान्तास्सर्वे।। एव भगवत्पादाः कर्मण. सुखदुःखात्मकत्वं प्रतिपाद्य "न ह वै सशरीरस्य सतः प्रियाप्रिययोरुपहतिरस्तीति" श्रुत्या सशरीरस्यैव सुखदुःखानुभवं प्रतिपाद्य " अशरार वा वसन्तं न प्रियाप्रिये स्पृशतः" (छा.उ * 8. 12) इत्यादिश्रुतिभिः अशरीरस्य सुखदुःखराहित्यं प्रदर्शितवन्तः।। अत्र अशरीरत्वं नाम किमिति शंकायां तत् धर्मकार्यमेवेति पूर्वपक्षे प्राप्ते तस्य स्वाभाविकत्वात् न धर्मकार्यत्वमिति सिद्धान्तितं भगवत्पादैः।। आत्मानः देहासङ्गित्वमसशरीत्वमिति रत्नप्रभा।।[24] आत्मानोऽसङ्गत्वात् तस्याशरीरत्वं स्वाभाविकं न कर्मप्राप्यमिति भाव·।। तथा च श्रुतिः।।

"अशरीरं शरीरेषु
अनवस्थेष्ववस्थितं
महान्तं विभुमात्मानं
मत्वा धीरो न शोचति" इति।।

तस्यायं रत्नप्रभाप्रतिपादितोऽर्थः।। तथाहि – अशरीरं–स्थूल–देहशून्य देहेष्वनेकेष्वनित्येषु एकं नित्यं अवस्थितं महान्तं व्यापिनं तमात्मानं ज्ञात्वा धीरस्सन् शोकोपलक्षितं संसारं नाऽनुभवतीति।।[25] अत्रात्मान. स्थूलदेहत्वं मास्तु सूक्ष्मदेहत्वं किं नस्यादिति शंकायांमुच्यते" अप्राणो ह्यमना. शुभ्र." (मु.उ. * 2.1.2) इति।। अत्र प्राणमनसोः क्रियाज्ञानशक्त्योर्निषेधात् तदधीनानां कर्मज्ञानेन्द्रियाणां निषेधो हि यतः अतः शुद्ध· इति रत्नप्रभा।। अपि चात्मनः देहद्वयाभावे "असङ्गोह्ययं पुरुष": (बृ. उ * 4.3.15) इति श्रुति. प्रमाणम्।। अत एवानुष्ठेयकर्मफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यमिति सिद्धम्।।

अत्र नित्यत्वेऽपि कीदृशं नित्यत्वम्? परिणामिनित्यत्व वा कूटस्थनित्यत्वं वा इति शकाया परिणामिनित्यत्वं प्रतिषेध्य कूटस्थनित्यत्वं प्रतिपादयन्ति भगवत्पादाः।। अत्र परिणामिनो नित्यत्वं प्रत्यभिज्ञाकल्पितं मिथ्यैव।। कूटस्थस्य तु नाशकाभावान्नित्यत्वं पारमार्थिकमिति विवृतं रत्नप्रभाकारैः।।[26] तथा च कूटस्थं पारमार्थिकं सर्वविक्रियारहितं विशोकं निरवयवं स्वयंज्योतिस्वभावमिति सिद्धम्।। ततः कूटस्थत्वात् न कर्मसाध्यमशरीरत्वं मोक्षाख्यम्।। अपि चेदमशरीरत्वं कार्यात्, कारणात् भूतात् वर्तमानात् भव्याच्चान्यदेवेति श्रुतेरवगम्यते।।[27] यदि मोक्ष· कर्मसाध्यश्चेत्तर्हि तस्यानित्यत्वं प्रसज्येत।। किन्तु नित्यो मोक्षः इति सर्वैर्मोक्षवादिभिरभ्युपगम्यते।। अतः न कर्मसाध्यो मोक्ष.।।

यद्यपि वेदान्तेषु मन्दाधिकार्यनुग्रहार्थं उपासनाविषयास्तत्र तत्रोपलभ्यन्ते तथापि तादृशोपासनाविधिविषयत्वन्तु वेदान्ततात्पर्यविषभीभूत निर्विशेषब्रहमणः न सम्भवति।। "यच्छ्रोत्रेण न श्रुणोति येन श्रोत्रमिद श्रुतम् तदेव ब्रहम त्वं विद्धि नेद यदिदमुपासते"[28] इत्यादिना ब्रहमणः उपास्यत्व सर्वात्मना निषिध्यते।। अत्र "अन्यदेव तद्विदितादथोऽविदितादधि" (के.उ 1 3)

इत्यादि श्रुतिभ्यो वेद्यत्वं ब्रहमण· प्रतिषिध्यते इति ज्ञेयत्वमपि तस्य नोपपद्यतेऽतो ब्रहमज्ञानात् मोक्षः इति सिद्धान्तोऽपि भज्यते इति न वाच्यम्।। यत्र ब्रहम ज्ञेयं न भवतीत्युच्यते वेदान्तेषु अन्यत्र वा तत्र वृत्यभिव्यक्तचैतन्या भास्यत्वरूपफलव्याप्यत्वरूप ज्ञेयत्वं नास्तीत्यर्थो ग्राहयः।। यत्र तु ब्रहम ज्ञेयमित्युच्यते वेदान्तेष्वन्यत्र वा तत्र वृत्तिप्रयुक्तावरणभङ्गाश्रयत्वरूपं वृत्तिविषयत्वमभिहितमिति सिद्धान्तः।। किञ्च "त्वंहि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि (प्र.उ 6.8) "सोऽहं भगवः शोचामि तन्मा भगनाञ्छोकस्य परं पारं तारयतु' (छा.उ. 7.1.3) "तस्मै मृदितकषायाय तमस· पर पारं दर्शयति भगवान् सनत्कुमारः" (छा. उ. 7.26.2) इत्याद्याः श्रुतय· मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञानस्य फलं दर्शयन्ति।। गौतममुनीनामप्ययमेवाभिप्रायः इत्युक्तं भगवत्पादैः।। तदुक्तं मुनिभिः गौतमैः "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति।।[29] तस्येदं रत्नप्रभाविवरणम्।।तथाहि– गौरोऽहमिति मिथ्याज्ञानस्यापाये रागद्वेषमोहादिदोषाणां नाश·।। दोषापायात् धर्माधर्मस्वरूपप्रवृत्तेरपायः, प्रवृत्यपायात् पुनः देहप्राप्तिरूपजन्मापायः एवं पाठक्रमेणोत्तरोत्तरस्य, हेतुनाशात् नाशे सति तस्य प्रवृत्तिरूप हेतोरनन्तरस्य कार्यस्य जन्मनोऽपायात् दुःखध्वंसरूपोऽपवर्गः भवतीति।।[30] मिथ्याज्ञानापायस्तु ब्रहमात्मैकत्वविज्ञानात्भवति।। "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति" (ब्र.उ*4,5,15) "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" (क.उ.*4.10) इत्यादिवाक्यैः द्वैतभावस्य मिथ्याज्ञानजन्यत्वात् ब्रह्मात्मैकत्व विज्ञानादेव तन्निवृत्तिरूपपद्यते।।

अत्रैक्य ज्ञानस्यापि अप्रमात्वं साधयितुं पूर्वपक्षी एवमाशंकते।। तथाहि – ब्रहमात्मैकत्वविज्ञानमपि भेदज्ञानवन्न प्रमा सम्पदादिरूपत्वेन भ्रान्तित्वादिति।। एवञ्च वेदान्तानां सम्पदादिरूपविशेषोपासनापरत्वं स्यादिति तस्याशयः।।

सिद्धान्ते भगवत्पादैः ब्रहमात्मैक्यज्ञानस्य सम्पददिरूपत्वं निषिध्यते न चेदमित्यादिवाक्यैः।। अत्र "अल्पालम्बनतिरस्कारेणोत्कृष्टवस्त्वभेदज्ञानं

सम्पत्" इति रत्नप्रभाकाराः।।[30] यथा मन. स्ववृत्यानन्त्यादनन्तं, ततः उत्कृष्टाः विश्वेदेवाः अप्यनन्ताः इत्यानन्तत्वसाम्यात् विश्वेदेवाः एव मनः इति सम्पत्, तथा चानन्तफलप्राप्तिर्भवति।। तथा च श्रुतिः "अनन्तं वै मनोऽनन्ताः विश्वे देवाः अनन्तमेव स तेन लोकं (बृ. उ. 3. 1.9) इत्यादि।। प्रकृतेऽपि चेतनत्वसम्याज्जीवे ब्रहमाभेदः सम्पत् इति।।

यदि ब्रहमात्मैकत्वविज्ञानं सम्पद्रूपं तर्हि "तत्वमसि" "अहं ब्रहमास्मि" "अयमात्मा ब्रहम" इत्यादि श्रुतीनां ब्रहमात्मैकत्ववस्तुप्रतिपादन परः पदसमन्वयः पीड्येत।। अतः न सम्पद्रूपं ब्रहमात्मैकत्वविज्ञानम्।।

इदं ब्रहमात्मैकत्वविज्ञानमध्यासरूपमपि न भवति।। अत्रालम्बनस्य प्राधान्येन ध्यानं प्रतीकोपास्तिरध्यासः इति रत्नप्रभाकाराः।।[32] यथा "नमो ब्रहमेत्युपासीत्' (छा.उ 3.18.1) "आदित्यो ब्रहमेत्यादेशः" (छा.उ 3.19.1) इति मन आदित्यादिषु ब्रहमदष्टयध्यासः।। तथा च यथा मन आदित्यादिषु ब्रहमबुद्धिः एवमेव जीवेऽपि ब्रहमत्वमारोप्य अहं ब्रहमेति व्यवहार इति।। अत्रारोप्यप्रधाना सम्पत्, अधिष्ठानप्रधानोऽध्यास इति तयोर्भेद.।।[33] यदि ब्रहमात्मैकत्वविज्ञानमध्यासरूपं स्यात्तर्हि तत्वमस्यादिवाक्यानां पदसमन्वय. पीड्येत।। ततो नेदं ब्रहमात्मैकत्वविज्ञानमध्यासरूपम्।।

किञ्चेदं ब्रहमात्मैकत्वविज्ञानं "वायुर्वावसंवर्गः प्रणो वा व संवर्गः" (छा.उ. 4.3.1)इतिवत् विशिष्टक्रियायोगनिमित्तमपि न भवति।। तथाहि – यथा प्रलयकाले वायुः अग्न्यादीन् संवृणोति संहरतीति संवर्गः।। स्वापकाले प्राणो वागादीन् संहरतीति संहारक्रियायोगात् संवर्गः इति ध्यानं छान्देग्ये विहितम्।। एवमेव वृद्धिक्रियायोगात् जीवो ब्रहमेति ज्ञानमिति।। नैतत्समीचीनम्।। विशिष्टक्रियायोगनिमित्ते ब्रहमात्मैकत्वविज्ञानेभ्युपगम्यमाने "भिद्यते हृदयग्रन्थिः छिद्यान्ते सर्वसंशयाः (मु.उ 2.2.8) इत्येवमादीनि अविद्यानिवृत्ति फलश्रवणान्युरुध्येरन्।। अतो न विशिष्टक्रियायोगनिमित्तं ब्रहमात्मैकत्वविज्ञानम्।।

एवमेव ब्रहमात्मैकत्व विज्ञानं आज्यावेक्षणादि कर्मवत्कर्माङ्गत्वसंस्काररूपमपि न भवति।। तथाहि–यथा पत्न्यावेक्षित

माज्य भवतीति उपंशुयागाद्यगस्याज्यस्य संस्कारकमवेक्षणं विहितं तथा कर्मणि कर्तृत्वे नाङ्गस्यात्मनः संस्कारार्थं ब्रहमज्ञानं विहितमिति।। तन्न समीचीनम्।। आज्यावेक्षणादिकर्मवत्कर्माङ्गत्व संस्काररूपे ब्रहमात्मैकत्वविज्ञानेऽभ्युपगम्यमाने "ब्रहम वेद ब्रहमैव भवति" (मु.उ. 3.2.9) इत्यादि तदभावापत्तिवचनानि न सामञ्जस्येनोपपद्येरन्।। अतो न कर्माङ्गत्वसंस्काररूपं ब्रहमात्मैकत्वविज्ञानम्।।

एवं भगवत्पादैः ब्रहमात्मैकत्वविज्ञानस्य सम्पदादिरूपत्वनिराकरणेन पुरुषव्यापारतन्त्रत्वं निराकृतं, सिद्धवस्तुत्वञ्च प्रतिपादितम्।। एवमेव – "अन्यदेव तद्विदितादथोऽविदितादधि" (के.उ. 1.3) "यद्वाचाऽनभ्युदितं येन वागभ्युद्यते तदेतद्ब्रहम त्वं विद्धि नेदं यदिदमुपासते"(के.उ. 1.4) इत्यादिश्रुतीनां प्रदर्शनेन ब्रहमण विदिक्रियाकर्मत्वं उपासनाकर्मत्वञ्च प्रतिषिध्यते।। ननु ब्रहमणः शाब्दबोधाऽविषयत्वे शास्त्रयोनित्वानुपपत्तिरिति चेन्न।। अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य।। तथा च ब्रहमणः शास्त्र जन्यबोधकृताविद्यानिवृत्ति फलशालित्व रूपशास्त्रप्रमाण कत्वमभ्युपगम्यते।। न शास्त्रजन्यबोधविषयत्वरूपं दृश्यत्वापत्तेरनेकशास्त्रविरोधाच्चेति तत्र बोधजनकत्वेन प्रतिज्ञातत्वात् न ब्रहमणः शास्त्रयोनित्वानुपपत्तिरिति भावः।। अत्र पुनः इयमाशंका स्यात्।। तथाहि– अविद्यानिवर्तकत्वेन शास्त्रस्य प्रमाण्येऽपि निवृत्तेरागन्तुकत्वात् अर्थात् जन्यत्वात् मोक्षस्यानित्यत्वं स्यादिति।। अत्र सिद्धान्ते एवमुक्तं रत्नप्रभाकारैः।। तथाहि– जन्यत्वेऽपि निवृत्तिरूपध्वंसस्य नित्यत्वात् आत्मरूपत्वाच्च नाऽनित्यत्वप्रसङ्गो मोक्षस्य इति।।[34]

अपि च उत्पत्तिविकाराप्तिसंस्काररूपं चतुर्विधमेव कियाफलम्।। अत्रोत्पाद्यं घटादि, विकार्यं [35]दध्यादि, आप्यं ग्रामादि, संस्कार्यं व्रीहिप्रोक्षणादिकञ्च।। तत्र कर्मणः आवश्यकता अस्त्येव किन्तु ब्रहमणः तदिभन्नत्वान्न कर्मापेक्षा।। तथाहि – अद्वितीयत्वादुत्पाद्यं न भवति।। "साक्षी चेता केवलो निर्गुणश्च" (श्वे.उ 6.11) इत्यादिश्रुतिभ्यः ब्रहमणः निर्गुणत्वात्तस्य विकार्यत्वं न सम्भवति।। किञ्चाप्यत्वमपि तस्य नोपपद्यते सर्वगतत्वेन

नित्याप्तत्वात्।। एवमेव संस्कार्यत्वमपि न घटते।।तथाहिः– संस्कारोद्विविधः संस्कार्यस्य गुणाधानेन वा स्याद्दोषापनयनेन वा।। यथा व्रीहयादौ प्रोक्षणादिना गुणाधानलक्षणसंस्कारः, वस्त्रादौ तु क्षालनेन दोषापनयनरूपसंस्कारश्च।। एतद्वयमपि ब्रहमणि न घटते।। तथाहि– अनाधेयातिशयब्रहमस्वरूपत्वात् तत्र गुणाधानं न सम्भवति नित्यशुद्धबुद्धमुक्तस्वभावत्वात् दोषापनयनञ्च।।

अपि च यथा आदर्शः निघर्षणक्रियया संस्क्रियमणे भास्वरत्वं धर्मः तथैवाऽऽत्मनि संस्क्रियमाणे मोक्षः इति पूर्वपक्षे प्राप्ते एवमुच्यते।। आत्मनोऽविकार्यत्वात् क्रियाश्रयत्व मपि नोपपद्यते इत्यादि।। तस्मात् ज्ञानमेकं मुक्त्वा क्रियया गन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यते इति सिद्धान्तितं भगवत्पादैः।।

अत्र "ननु ज्ञानं नाम मानसीक्रिया" इति ज्ञानस्यापि क्रियारूपत्वं सिषाधयिषुः पूर्वपक्षिणः शंकायां, सिद्धान्ते "यत्र वस्तुस्वरूपनिरपेक्ष्यैव चोद्यते" इत्यदिवाक्यैः तयोर्वैलक्षण्यं प्रदर्शितं भगवत्पादैः।। तत्रायं रत्नप्रभाव्याख्यानसारांशः।। विषयवस्त्वनपेक्षा कृतिसाध्या च क्रिया।। "यस्यै दावतायै हविर्गृहीतं स्यात् तां मनसा ध्यायेद्वषट्करिष्यन्" इति "सन्ध्यां मनसा ध्यायेत् (ऐ. ब्रा 3.81) इति चैवमादिषु यथा यादृशी ध्यानक्रिया वस्त्वनपेक्षा पुन्तत्रा च चोद्यते तादृशी क्रिया।। ध्यानं यद्यपि मानसं तथापि कृतिसाध्यत्वाक्रियैव।। परन्तु ज्ञानस्य ततो वैलक्षण्यम्।। ज्ञानन्तु प्रमाणजन्यं, प्रमाणञ्च यथाभूतवस्तुविषयम्।। ततो वस्त्वव्यभिचारादपुन्तत्रत्वाच्च ध्यानात् ज्ञानस्य महद्वैलक्षण्यम्।।

अत्र "आत्मानं पश्येत्" (बृ.उ 4.4 23) "ब्रहम त्वं विद्धि" (के.उ. 1.5) "आत्मा वा अरे द्रष्टव्यः" (बृ,उ 2.4.5) इति ज्ञाने लिङ लोट् तव्यप्रत्ययाः विधायकाः श्रूयन्ते अतो ज्ञानमपि विधेयमिति प्राप्ते उक्तं भगवत्पादै.– "तद्विषये लिङादयः श्रूयमाणाः अपि अनियोज्यविषयत्वाकुण्ठी भवन्त्युपलादिषु प्रयुक्त क्षुरतैक्षण्यादिवत्" इत्यादि।। कृत्यसाध्यं नियोज्यशून्य वा ज्ञानम्।। तस्मिन् ज्ञानरूपविषये विधयः प्रवर्तयितुमशक्ताः भवन्तीति रत्नप्रभाविवरणम्।। अपि चात्र ब्रहमण. अहेयानुपादेयवस्तुविषयत्वात् ज्ञेयत्वेनापि विधेयत्व

नास्ति।।

अथ किमर्थानि तर्हि " आत्मा वा अरे दृष्टव्यः" इत्यादि विधिच्छायानि वचनानीति शंकायां "स्वाभाविक प्रवृत्तिविषयविमुखीकरणार्थानी"त्युक्तं भगवत्पादैः।। अत्र विधिच्छायानीत्यत्र प्रसिद्धयागादिविधितुल्यानीति रत्नप्रभा।तथा च विधिप्रत्ययैरात्मज्ञानं परमपुरुषार्थसाधनमिति स्तूयते स्तुत्या आत्यन्तिके ष्टहेतुत्वभ्रान्त्या या विषयेषु प्रवृत्तिः आत्मश्रवणादिप्रतिबन्धिका तन्निवृत्तिफलानि विधिपदानीति च रत्नप्रभासारांश.।।एवञ्चात्मज्ञानप्रतिबन्धकनिवृत्तिफलत्वमेव विधेयत्वमिति सिद्धम्।। अत एव "आत्मा वा अरे द्रष्टव्य–" इत्यादौ 'द्रष्टव्य' इत्यत्र दृशिधातोत्तर तव्यप्रत्ययस्यार्हार्थकत्व स्वीकृत्य आत्मा दर्शनार्हः इति वक्तव्यम्।। आत्मनोऽद्वितीयत्वादात्मबोधे विधिर्नास्तीति सर्वाश्च श्रुतयः उदघोषयन्ति।।तथाहि–"इदं सर्वं यदयमात्मा" (बृह. उ. 2.4.6) "यत्रत्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" (बृ.उ 4.5.15) इत्यादि।। अत्र आत्मनः कृतिविषयत्वाभावे हानोपादानाय वा न भवतीति पूर्वपक्षे प्राप्ते– अलङ्कारोहयमस्माकं यदब्रहमात्मावगतौ सत्यां सर्वकर्तव्यताहानिः कृतकृत्यता चेति सिद्धान्तित भगवत्पादै.।। तथा च श्रुतिः– "आत्मानं चेद्विजातीयादयमस्मीति पूरुषः

किमिच्छन् कस्य कामाय सरीरमनुसंज्वरेत्" (बृ.उ 4.4.12) इति।। एवञ्च ब्रहमणः कृत्यसाध्यत्वात्, उपासनाऽविषयत्वात्, ज्ञानरूपत्वाच्च न प्रतिपत्तिविधिविषयत्वम्।।

# प्राभाकरणां पूर्वपक्षः

मीमांसकैकदेशिनः प्राभाकराः कार्यन्वितार्थे शक्तिमिच्छन्ति।। एते अन्विताभिधानवादिनः।। पदानामेव संसृष्टस्वार्थप्रतिपादनमन्विताभिधानं नाम इति विवरणाचार्याः–[36] तथा चैतेषां मते पदं शक्त्या न अनन्वितं

स्वतन्त्रपदार्थमुपस्थापयति अपि तु पदान्तरेणान्वित पदार्थमेव।। प्रभाकरास्तु सर्वस्यापि शास्त्रस्य कार्य परत्वमभ्युपगच्छन्ति।। तेषाञ्च मतं–यदपि केचिदाहुः–प्रवृत्तिनिवृत्तितच्छेषव्य तिरेकेण केवलवस्तुवादी वेदभागो नास्तीत्यादि प्रदर्शितं भगवत्पादैः।। प्रभाकराणामयमाशयः यत् सर्वस्यापि शास्त्रस्य कार्यपरत्वमेवेति।। कार्य नाम कृतिसाध्यम्।। अत एव ते कार्यान्वितं शक्तिमभ्युपगच्छन्ति।। कार्यत्वविषयतया– साक्षात्परम्परया वा निरूपिता या विषयता तादृश विषयताशालि शाब्दबुद्धित्वावच्छिन्नं प्रति लिङ्लोट्तव्यपत्ययान्यतमस्य कारणत्वम्।। लोके हि घटमानय. गामानय, घटं नय, गां बधान इत्यादिषु आनयननयनबन्धनादिकार्यान्वितघटपटादिपदानां शक्तिरवधार्यते।। "घटमानय" इत्यत्र घटानयनं कार्यमिति बोधो जायते।। कार्यत्वविषयतया साक्षान्निरूपिता विषयता आनयननिष्ठविषयता परम्परया निरूपिता विषयता तु घटादिनिष्टा विषयता।। तादृश बुद्धिं प्रति लिङ्गादिज्ञानस्य कारणत्व अन्वयव्यतिरेकानुभवसिद्धम्।। लिङादिरहितस्य वाक्यस्य तु अर्थावबोधो नास्त्येव।।

सप्तद्वीपा वसुमती राजाऽसौ गच्छति इत्यादिस्थलेषु सप्तद्वीपा वसुमती तामवेहि जानीयाद्वा राजाऽसौ गच्छति तं पश्य इति लिङादिपदाध्याहारेणैव तत्र शाब्दबोधो निर्वाहयते।। द्वारमित्यादौ पिधेति पदाध्याहारेणैव शाब्दबोधो निर्वाहयते।। यत्र द्रव्यदेवताकं स्तूयते तत्र यजेत इति विधिं परिकल्प्य विध्यर्थविषयकबोधजनकत्वेन तादृशवाक्यस्य प्रमाण्यमभ्युपगम्यते।। एवं वेदान्तवाक्येष्वपि तत्वमसीत्यत्र 'तत्वमसीत्युपासीत' 'अहं ब्रहमेत्युपासीत' इत्येवं, "सत्यं ज्ञानमनन्त ब्रहम" इत्यादौ गम्यत्वस्म लिडाद्यध्याहारेणैव तत्र बोध. सम्पादनीय. प्रमाण्यञ्च सम्पादनीयम्. तथा च वस्तुमात्रकथनेन प्रयोजनं नास्तीति सिद्धबोधि वेदान्तानां कूटस्थ ब्रहमबोधकत्वेन प्रामाण्यं न सम्भवति।।अत. तेषां यथाकथञ्चित्कार्यपरत्वेनैव प्रामाण्यं सम्पादनीयमिति तेषामाशय.।।

## प्राभाकरमतखण्डनम्

अत्र भगवत्पादाः "औपनिषदस्य पुरुषस्य अनन्यशेषत्वात्" इत्यादिवाक्यैः स्वसिद्धान्तं प्रदर्शयन्ति।।[37] अत्र रत्नप्रभाकाराः।। तथाहि– अज्ञातस्य फलस्वरूपस्यात्मनः उपनिषदेकवेद्यस्याकार्यशेषत्वात्कृत्स्नवेदस्य कार्यपरत्वमसिद्धम्।।[38] इत्यादि।।अत्र सिद्धान्तसारांशस्तावदधम्।।तथाहि– लिङ्गाद्यध्याहारं विनाऽपि "सप्तद्वीपा वसुमती", "राजाऽसौ गच्छति," "पुत्रस्ते जातः", "कन्या ते गर्भिणी", "रज्जुरियं नाऽयं सर्पः" इत्यादि वाक्येभ्योऽपि लिङाद्यर्थविषयकोपस्थितरहितस्यापि पुरुषस्यार्थबोधो जायते, तेन हर्षविषादाः लोके सर्वेऽनुभवन्तीति सर्वेषामनुभवसिद्द एव।। एवं सर्वानुभवसिद्धमपलप्य सर्वत्राऽपि कार्यपरत्वमेवेतिवदतां प्राभाकरणां मतं निरूपपत्तिकं प्रतिभाति।। क्रियाप्रयोजनसाधनत्वमात्रेण क्रियापरत्वमेव क्रियापरत्वमेवेति कथनं न सार्वत्रिकं भवितु मर्हति।।रज्जुपिण्डे सर्पभ्रान्तिमतः भयकम्पादिकञ्चानुभवतः पुरुषस्य नाऽयं सर्पः किन्तु रज्जुरेव इति आप्तेन रज्जुस्वरूपे उच्यमाने ततः रज्जुस्वरूपं ज्ञात्वा सर्पभ्रान्तिं जहाति तत्परयुक्त भयकम्पादिकञ्च जहातीति लोकेऽनुभवसिद्धमेव।। तत्र लिङाद्यनुसन्धानं वा तदर्थविषयकोपस्थितिर्वा नैवापेक्षते।। एवं नित्यशुद्धबुद्धमुक्तस्वभावे, निर्विशेषे नित्यस्वप्रकाशानन्दब्रह्मणि तत्वमसि इत्युपदिश्यमाने अनाद्यविद्या तद्वासनकर्मकरणादिप्रयुक्तं ब्रह्मापरनाम्नि परमात्मनि परिकल्पितां जीवभ्रान्तिं तत्वमसीति महावाक्योपदेशजन्य साक्षात्कारेण जहाति।। तन्मूलभूताविद्यासहितां जहाति।।एवञ्च तत्र लिङादीनामपेक्षा न जन्मशतेनापि कल्पयितुं शक्या।। अपि च कर्मान्यत् ज्ञानमन्यत् तयोः सर्वधा समुच्चयः न संभवत्येव।। स्थितिगत्योः विरुद्धत्वात् नाऽहं कर्ता न भोक्ता किन्तु सच्चिदानन्दस्वरूप एवेति ज्ञानं, अहं कर्ता भोक्ता, एतत्कर्म मया कर्तव्यम्. एतत्फलञ्च भोक्तव्यम् इत्यादि आभिमानिकज्ञानञ्चैकस्यैकदा न संभवतः।। ज्ञानञ्च वस्तुतन्त्रम्।। तत्र घटं पश्य इत्यत्र घटे चक्षुः यदा यदा निक्षिपति

तदा तदा सहस्रसंख्याकाः आप्ताः अपि तं पटं जानीहि इति वदन्तोऽपि घटं पटत्वेन ज्ञातुं न शक्नोत्येव॥ तत्र द्रष्टुः घटविषयकज्ञानमेव जायते न पटविषयकं ज्ञानम्॥ एतादृशाभिप्रायमेव मनसि कृत्वा "तत्र लिङादयः श्रूयमाणा अपि कुण्ठीभवन्त्युपलादिषु प्रयुक्त क्षुरतैक्ष्ण्यवत्" इत्याद्यभिहितं भगवत्पादैः॥ एवञ्च सर्वानर्थनिवृत्तिरूपे महति प्रयोजनेऽवगम्यमाने वेदान्तानां कार्यपरत्वेनैव प्रमाण्यं न सिद्धपरत्वेनेति वचनं साहसमात्रम्॥

किञ्च कृत्स्नवेदस्य कार्यपरत्वं वदतां प्राभाकरणां मतं एवं पूर्वपक्षीक्रियते रत्नप्रभाकारैः॥तथाहि– ब्रहमणः नास्तित्वादेव कृत्स्नवेदस्य कार्यपरत्वं, उत वेदान्तेषु तस्याभानात् अथवा कार्यशेषत्वात् किं वा लोकसिद्धत्वात् आहोस्वित् मानान्तरविरोधात् इत्यादि॥

तत्राद्यं न घटते। तथाहि– ब्रहमात्मनोरभिन्नत्वात् आत्मान. पत्याख्यातुमशक्यत्वात् ब्रह्मणः नास्तित्वं नैवोपपद्यते॥ किञ्चात्मनः निराकरणमसाध्यमेव॥तदुक्तं भगवत्पादैः य एव हि निराकर्ता तस्यैवात्मत्वात् इत्यादि॥

अपि च सर्वाः उपनिषदः मुक्तकण्ठं ब्रहमैव प्रतिपादयन्तीति वेदान्तेषु तस्याभानादिति द्वितीयोऽपि परास्तो भवति॥

तथैव उत्पाद्यादिचतुर्विधद्रव्यविलक्षणत्वात् ब्रहमणः, तस्य कार्यशेषत्वमपि नोपपद्यते॥

तथैव, यं तीर्थकाराः अपि न जानन्ति तस्यालौकिकत्वं किमु वाच्यमिति ब्रहमण– लोकसिद्धताऽपि निराक्रियते॥

एवमेव, ब्रहमणः केषाञ्चिद्वादिनां प्रमाणेन युक्त्या वा अगम्यत्वान्न मानान्तरविरोधत्वं तस्य॥ तथा च सर्वाभिरुपनिषदिभ· नित्यशुद्धबुद्धमुक्तस्वभावस्यात्मनः प्रतिपाद्यमानत्वात् भूतवस्तुपरो वेगभागो नास्तीति प्राभाकरोक्तं वचन साहसमात्रमेवेति भगवत्पादाशयो व्याख्यात. रत्नप्रभाकारैः॥

किञ्च यद्यपि "दृष्टो हि तस्यार्थ. कर्मावबोधनम्" इत्यादीनि

प्रवृत्तिनिवृत्तिपरत्वेनैव वेदस्य सार्थक्यं ब्रुवन्ति तथापि तद् धर्मजिज्ञासाविषयम्।।किन्तु ब्रह्ममीमांसाशास्त्रे तत्परवेदान्तानां कार्यपरत्वं वक्तुं न शक्यते।। अत एव वेदान्तप्रकरणघटितोपा सना वाक्यानामपि उपासना द्वारा अन्तः करणशुद्धिं सम्पाद्य आत्मतत्वज्ञानं सम्पादनीयमित्यत्रैव तात्पर्यम्।। अत्र" सत्यं ज्ञानमनन्तं ब्रह्म" इत्यवान्तरवाक्यानां 'तत्वमसि' इत्यादि महावाक्यानाञ्च निर्गुणब्रह्मपरत्वमेव न त्वन्यपरत्वम्।। अवान्तरवाक्यानां तात्पर्यमवान्तरतात्पर्यमिति महावाक्यानां तात्पर्यं महातात्पर्यमिति तद्वदुपवर्ण्य 'अहमीश्वरो वा' 'अहमात्मा वा न वा' 'नाऽहमीश्वरः' इत्यादि भेदभ्रमसंशयनिवर्तकत्व महावाक्याज्ञानस्यैव न तु सत्यं ज्ञानंमनन्तमित्यवान्तरवाक्यजन्यज्ञानस्य इति विवरणे प्रतिपादितम्।। एवं "तरति शोकमात्मवित्" (छा.उ. 7.1.3) इत्यादौ आत्माज्ञाननिवर्त्यत्वं शोकशब्दवाच्यस्य बन्धस्य प्रतीयमानत्वात् ज्ञानैकसाध्या बन्धनिवृत्तिः न कर्मसाध्या बन्धस्याज्ञानविलसितत्वात्।।एवञ्च बन्धनिवृत्तिः ज्ञानैकसाध्यत्वेन ज्ञानस्य वस्तुतन्त्रत्वेन च ब्रह्मज्ञाने जाते निखिलसंसारनिवृत्तिर्भवति।।

अत्र श्रुतब्रह्मणोऽपि संसारित्वमिति शंकाया– नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्व शक्यते दर्शयितुं वेदप्रमाणजनितब्रह्मात्मभावविरोधात्।। नहि शरीराद्यभिमानिनो दुःखभयादिमत्वं दृष्टमिति तस्यैव वेदप्रमाणजनित ब्रह्मात्मावगमे तदभिमाननिवृत्तौ तदेव मिथ्याज्ञाननिमितं दुःखभयादिमत्व भवतीति शक्य कल्पयितुम्।। न हि धनिनो गृहस्थस्यधनाभिमानिनो धनापहारनिमित्तं दुःख दृष्टमिति तस्यैव प्रव्रजितस्य धनाभिमानरहितस्य तदेवधनापहारनिमित्तं दुःखं भवति इत्यादि दृष्टान्तैः तन्निराकृतम्।। तदुक्तं श्रुत्या– "अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः" (छा. 8.12.1) इति।। अत्र शरीरे पतितेऽशरीरत्वं स्यात् न जीवत. इति पूर्वपक्षे उक्तं भगवत्पादैः– सशरीरस्य मिथ्याज्ञानकल्पितत्वात् जीवतोऽपि पुरुषस्याशरीरत्वं कल्पयितुं शक्यम् इत्यादि।।

एवञ्चैतैः दृष्टान्तैः जीवन्मुक्तावस्था वर्णिता भगवत्पादैः।। तत्रायं दृष्टान्तोपि प्रदर्शितः भगवत्पादैः– "तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता

प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते अथाऽयमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव (बृ.उ. 4.4.7) इति।। तस्य रत्नप्रभाव्याख्यानम्– तथाहि– अहिनिर्ल्वयनी सर्पत्वक् वल्मीकादौ प्रत्यस्ता निक्षिप्ता मृता सर्पेण त्याक्ताभिमाना वर्तते एवमेवेदं विदुषा त्यक्ताभिमानं शरीरं तिष्ठति अथ तथा त्वचा निर्मुक्त सर्पवदेव अयं देहस्थोऽशरीरः।। विदुषो देहे सर्पस्य त्वचावाभिमानाभावात्, अशरीरत्वात् अमृतः प्रणितीति प्राणो जीवन्नपि ब्रह्मैवेति।। अपि च "सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागावागिव समना अमना इव सप्राणोऽप्राण इव" "स्थितप्रज्ञस्य का भाषा" (भ. गी. 2. 54) इत्यादि श्रुतिस्मृतिभिः जीवन्मुक्तस्य लक्षणान्यभिवर्ण्यन्ते।। अपि च " भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः

क्षायन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे (मु.उ. 2.2.8) इति जीवन्मुक्तावस्थां स्पष्टं दर्शयति श्रुतिः।। तस्मान्नावगत ब्रह्मात्मभावस्य यथापूर्वं संसारित्वम्।। यस्य तु यथापूर्वं संसारित्वं नाऽसावधिगतब्रह्मात्मभाव इति स्पष्टमवोचिभाष्यकारैः।।

अत्र पुनः श्रवणात्पराचीनयोः मनननिदिध्यासनयोः दर्शनात् विधिशेषत्वं ब्रह्मणः न स्वरूपपर्यवसायित्वमिति पूर्वपक्षे प्राप्ते, "न श्रवणवत् अवगत्यर्थत्वान्मनन निदिध्यासनयोः" इत्यादि सिद्धान्तितं भगवत्पादैः।। तत्र रत्नप्रभाकाराः।। तथाहि– यदि ज्ञाने विधिमङ्गीकृत्य वेदान्तैरवगतं ब्रहम विधेयज्ञाने कर्मकारकत्वेन विनियुज्येत तदा विधिशेषत्वं स्यात्, न त्ववगतस्य विनियुक्तत्वं प्राप्तावगत्या फललाभे विध्ययोगत्।।

एवञ्च ज्ञानेनैव मोक्षरूपफलेलाभात् येन फलार्थं ज्ञातस्य ब्रहमण– विधेयज्ञाने विनियुक्तत्वं स्यात् तस्मान्न विधिशेषत्वं ब्रहमण– इति भावः।। तथाचात्र ब्रहमणः विधिशेषत्वं निराकृत्य स्वस्वरूपपर्यवसायित्वं ज्ञानैकसाध्यत्वञ्च प्रतिपादितमित्ययमेव समन्वयाधिकरणसारांशः इत्यलमतिविस्तरेण।।

## उपसंहारः

तत्रभवन्तः रामानन्दसरस्वतीमहाभागाः पदवाक्यन्यायवेदान्तशास्त्रेषु परिनिष्ठितप्रज्ञाः इति रत्नप्रभाव्याख्यानपरिशीलनादवगम्यते।। रत्नप्रभायां प्रायशः तत्प्राचीनानां सर्वेषां भाष्यव्याख्यातृणां मतानि यथावकाशं तत्र तत्र परामृष्टानि विमृष्टानि च दृश्यन्ते।। तदुक्तं स्वयमेव ग्रन्थकारैः–

"विस्तृग्रन्थवीक्षायामलसं यस्य मानसम्
व्याख्या तदर्थमारब्धा भाष्यरत्नप्रभाऽभिधा"
"नानाविधग्रन्थजातं वीक्ष्यसम्यग्यथामति
शारीरकस्य भाष्यस्य कृता व्याख्या सतां मुदे" इत्यादि।।

तथा च सर्वव्याख्यनपरिशीलनपूर्विका, भगवत्पाद हृदयदर्शिनीचेयं व्याख्या भामती, विवरण, न्यायनिर्णयादि व्याख्यानानीव महत्वपूर्णा प्रमाणिकी च चकास्ति।।

अत्रेयमाशङ्का स्यात्।।

रामानन्दैः विरचिताः सर्वे ग्रन्थाः प्रायशः व्याख्यानरूपाः एवेत्यतः तेषां नवीनदिशा प्रदर्शनग्रन्थनिर्माणदक्षता नासीद्वेति।। तन्न समीचीनम्।। उपज्ञा तावत् त्रिविधा।।प्रथमा नवीनोपक्रममारचयति।।द्वितीया चोपक्रान्तविषयस्य विमर्शेन विवृतिं तनोति।। तृतीया त्वतिविस्तृतविषयस्य संग्रहेण विशदीकरोति।।तत्र प्रथमप्रक्रियायाः एव महानादरः नेतरयोरिति न भाव्यम्।। विषयप्रपञ्चनस्यापि कष्टसाध्यत्वात्।।वस्तुतस्तु मूलकर्त्रपेक्षया व्याख्याकर्तुरेव कलेशोऽधिको भवति।।यतः अभिप्रायप्रकटने मूलकर्तुः यादृशं स्वातन्त्र्यमस्ति तादृशं स्वासन्त्र्यं व्याख्याकर्तुः नास्त्येव।। ततः मूलतात्पर्यमवगम्य विस्तरेण प्रतिपादने महान् कलेशोऽनुभूयते व्याख्याकारैः।।अतो हेतोः मूलकर्तुः यावान् गौरवः प्रदर्शितः तावानेव गौरवः व्याख्यातृ विषयेऽपि प्रदर्शितो दृश्यते पण्डितप्रवरैः।।

"प्रत्यधिकरणस्यारम्भेऽधिकरणरचना रत्नप्रभाव्याख्याने विशेषांशत्वेन परिगणनीया भवति।।रत्नप्रभा चेयं भामतीविवरणादिव्याख्यानवत् गाम्भीर्यं

प्रामाण्यञ्च वहती तदपेक्षया सरला सुलभावगाहा च वरीवर्ति।। तद्यथा तत्रादावध्यासभाष्यव्याख्यानावसरे अध्यासस्वरूपप्रदर्शने भगवत्पादानामाशयः स्पष्टं प्रकाशितः।। अध्यासलक्षणनिरूपणावसरे भगवत्पादोक्तस्य 'स्मृतिरूपः परत्र पूर्वदृष्टावभासः "इति लक्षणस्य" अत्र 'परत्रावभासः' इत्येव लक्षणं शिष्टं पदद्वयं तदुपपादनार्थम्" इति यदुक्तं तत्तेषामक्षरलाघवप्रज्ञां अथवा अल्पाक्षरेऽनल्पार्थबोधनप्रज्ञां व्यक्तीकरोति।। ततः 'एकावच्छेदेन स्वसंसृज्यमाने स्वात्यन्ताभाववत्यवभास्यत्वम्" इति त्रिपदात्मकं साद्यनाद्यध्याससाधारणलक्षणं यदुक्तं तत्तेषां न्यायशास्त्रवैदुष्यं प्रकटीकरोति।। अपि च आत्मनोऽपि विषयत्वं समर्थयितुं नाऽयमेकान्त्येनाऽविषयः अस्मत्प्रत्ययविषयत्वादित्याद्युक्तं भगवत्पादैः।।अत्र रत्नप्रभाकारैस्तु भानभिन्नत्वे सति भानप्रयुक्तसंशयनिवृत्यादि फलभाक्त्वंरूपं विषयत्वमेकं भानभिन्नत्वरहितं भानप्रयोज्यसंशयनिवृत्यादिफलभाक्त्वं विषयत्वमपरं इति विषयत्वं द्विधाव्याख्याय तत्रात्मनि प्रथमरूपविषयत्वस्य अभावेऽपि द्वितीयरूपं विषयत्वं सम्भवत्येवेति सुष्ठु विविच्य प्रतिपादितम्।। एवमेव कारणाध्यासमप्रदर्श्य कार्याध्यासप्रदर्शने भगवत्पादानामभिप्रायः "अत्र कार्याध्यास एवानर्थहेतुः न कारणाध्यासः" इत्यादि समर्थितः रत्नप्रभाकारैः।। ततः ख्यातिवादप्रसङ्गे इतरमतापेक्षयाऽनिर्वचनीयख्यातेः वैशिष्टयं स्पष्टं प्रतिपादितं रत्नप्रभाकारैः।। एतावता अध्यासभाष्यव्याख्याने तत्स्वरूपं, तद्भेदाः, तन्निवृत्यादि विषयाश्च सुनिपुणं प्रदर्शिताः रत्नप्रभाकारैः।।

जिज्ञासाधिकरणे ब्रह्मजिज्ञासायामधिकारिनिरूपणावसरे साधनचतुष्टयसम्पत्तेरावश्यकता, साधनचतुष्टये पूर्वपूर्वस्योत्तरोत्तरहेतुत्वमित्यादि विषयाः अपि स्पष्टं प्रतिपादिताः।। ततो ब्रह्मजिज्ञासायाः आवश्यकता, आत्मस्वरूपविषये विविध दार्शनिकानां मतानि च स्वकृतविवरणोपन्यासे एव प्रदर्शितानीति तेषाञ्च प्रसङ्गो नाऽऽनीतः रत्नप्रभायाम्।। तत्रात्मनः स्वरूपनिरूपणविषये तु विविधदार्शनिकमतप्रदर्शनं तेषां सर्वशास्त्रपरिचयं स्पष्टीकरोति।। किञ्च जिज्ञासापदव्याख्यानावसरे भगवत्पादैः " अवगतिपर्यन्तं ज्ञानं सन् वाच्यायाः

इच्छायाः कर्म" इत्याद्युक्तम्॥ तत्र रत्नप्रभाकारै. "आवरण निवृत्तिरूपाऽभिव्यक्तिमच्चैतन्यं ज्ञानमवगतिः इति व्याख्यानेन अद्वैते मोक्षस्वरूपं स्पष्टं प्रदर्शित भवति॥

शास्त्रयोनित्वाधिकरणे, जगत्कारणत्वेन अनुमित ब्रहमणः सर्वज्ञत्वं वेदहेतुत्वेनाऽपि प्रदर्शितम्॥ अपि च वेदानां नित्यत्वे ब्रहमणः शस्त्रयोनित्व नास्तीति, ब्रहमणः वेदकर्तृकत्वे तेषामपौरुषेयत्वमेव न घटते इति शङ्काया – यत्र ह्यर्थज्ञानपूर्वकं वाक्यज्ञानं वाक्यसृष्टौ कारणं तत्र पौरुषेयता, अत्र च परमेश्वरः स्वकृतपूर्वकल्पीयक्रमवन्त वेदराशिं तदर्थांश्चं युगपज्जानन्नेव करोतीति न वेदस्य पौरुषेयता इति वेदानामपौरुषेयत्वं साधितम्॥ अत्र रत्नप्रभाकारैः स्वप्रतिभा सुनिपुणं प्रादर्शि॥

समन्वयो नाम तुरीयेऽधिकरणे ब्रहमणः शास्त्रयोनित्वं न घटते इति पूर्वपक्षीकुर्वतां भाट्टमीमांसकानां मतं ब्रहमणः षड्विधलिङ्गतात्पर्यविषयत्वप्रदर्शनेन तन्निराकृतम्॥ अत्र सर्वेषामुपनिषद्वाक्यानां अद्वैतब्रहमतात्पर्यकत्वं रत्नप्रभाकारैः स्पष्ट न्यरूपि॥

ततो, ब्रहमणः शास्त्रप्रमाणकत्वमस्त्येव किन्तु प्रतिपत्तिविधिविषयत्वेन तदुपपद्यते न स्वातन्त्र्येणेति वदतां वृत्तिकाराणा मतं सम्यक्प्रदर्श्य सिद्धान्ते कर्मब्रहमणो· व्यत्यासः ब्रहमणः ज्ञानैकवेद्यत्वञ्च स्पष्टमभाषि॥ अत्र रत्नप्रभाव्याख्या सर्वाऽपि विवरणरूपा चकास्ति॥

तदनन्तरं, प्रवृत्तिनिवृत्तितच्छेषव्यतिरेकेण केवलवस्तुवादी वेदभागो नास्तीति प्राभाकराणां मतमनूद्य "रज्जरिय नाऽयं सर्पः" इत्याद्युदाहरणैः तन्निराकृतम्॥ ततो मोक्षस्वरूपं जीवन्मुक्तिदशा मोक्षोपायादिविषयाः विवृताः रत्नप्रभाकारैः॥ व्याख्यानेऽस्मिन् सर्वत्र भगवत्पादहृदयं प्रदर्शयितुमेव प्रयत्नः कृतः व्याख्याकारै·॥ व्याख्यानेऽस्मिन् इतरशास्त्राणां पाण्डित्यं विशिष्य तर्कशास्त्रपाण्डित्यप्रदर्शनं यथावसरमेव कृत व्याख्याकारैरिति ("नाऽमूलं लिख्यते किञ्चित्" इति नियममनुसरतीत्यवश्यमङ्गीकर्तव्यम्॥ एते प्रायशः विवरणमतानुयायिनः इति स्पष्टमवगम्यते॥ अपि च

अनुभूतिस्वरूपाचार्यकृतप्रकटार्थविवरणेन प्रभाविताः एते रत्नप्रभाकाराः भामतीकाराणां विषये "एतत् सूत्रभाष्य भावाऽनभिज्ञाः सन्यासाश्रमश्रवणादौ विधिर्नास्तीति वदन्ति" इत्यादिवाक्यैः विमर्शनातैक्ष्ण्यं प्रदर्शयन्ति।। रत्नप्रभाकारैः पञ्चपादिका भामती प्रकटार्थविवरणम्, पञ्चपादिकाविवरणं भाष्यभावप्रकाशिका, न्यायनिर्णयः इत्यादिग्रन्थानां परामर्शस्तत्र तत्र कृतः।।

साधनाद्याध्यासधारणलक्षणं, जिज्ञासपदविवरणं, अधिकारिनिरूपणे पूर्वेक्तांशाः आत्मस्वरूपप्रतिपादने पूर्वपूर्वशास्त्राणां दोषप्रदर्शनेन वेदान्तसम्मताऽऽत्मतत्वप्रदर्शन, वेदानामपौरुषेयत्वसमर्थन मित्याद्यांशाः रत्नप्रभाकाराणां स्वोपज्ञकाः इति संभावनीयम्।।

एवञ्च भगवत्पादहृदयमवगन्तुं रत्नप्रभा अत्यन्तमुपकरोतीति हेतो. पण्डितैः जिज्ञासुभिश्च इयमेव व्याख्या अध्याप्यतेऽधीयते च।। अतः भामत्यादिव्याख्यानानीवेयं रत्नप्रभाऽपि प्रामाणिकी, गंभीरा, अद्वैतसिद्धान्तप्रदर्शने समग्रा च।।

तद्व्याख्या अभिव्यक्ता यद्यपिं चतुस्सूत्रीपर्यन्ता तथाप्यतिविस्तृताऽद्वैतसिद्धान्त प्रदर्शनेऽतिसमग्रा च।। एवमेव भागदीपिकाऽपि यद्यपि ईक्षत्यधिकरणपर्यन्ता तथापि विषयनिरूपणे सम्पूर्णा।। तत्र भागदीपिकापेक्षयाऽभिव्यक्ता तावत्सरला विस्तृता च।। प्रायशस्तयोर्मध्ये सिद्धान्तभेदो नास्त्येव।। किन्तु विषयप्रपञ्चनसरल्यामेव वैविध्यम्।। अभिव्यक्तायां भामती विवरणं वाक्यवृत्तिव्याख्या ब्रहमविद्यासरणम् इत्यादि ग्रन्थाः तत्र तत्र परामष्टाः।। भागदीपिकायामद्वैतदीपिकादिग्रन्थाः प्रस्ताविताः।।

उभावपि रत्नप्रभानिरूपितार्थप्रपञ्चने अतिसमर्थावित्यलमतिविस्तरेण।।



## उपोद्घात :

1. ब्र. सू. शां. भा पृ. 90–93
2. बदराः बदरीवृक्षाः यस्मिन् देशे सन्ति स देशविशेषो बादरः स एवायनं स्थानं यस्य सः बादरायणः श्री वेदव्यास :– पूर्णानन्दीयम् पृ . 5.
3. वाचस्पत्यम् ● प्रथमो भाग. ॥
4. शा. भ. सू ● सू .30
5. सौरसंहिता –
6 मां . का 3. 16
7. मां का. भा ● पृ.
8. ऋगर्थदीपिका – 1– 164. 46.
9. मा. उ. भा – पृ.
10. ब्र, सू. शां. भा ● पृ 103 – 106.
11. श्री शंकरात्प्रागद्वैतवादः पृ – 82, 83.
12. अ. वे. सा. को ● पृ. 209.
13. र. प्र ● पृ. 22
14. आश्रमश्रीचरणास्तु टीकायोजनायामेवमाहुः ॥ र. प्र. पृ. 20
15. वाचस्पतिस्तु मण्डनपृष्ठ सेवी इत्यादि ॥ ● प्रकटार्थविवरणम् ●
16. र. प्र. व्याख्या ● 3–4–48.

रत्नप्रभाकारः रामानन्दः

1. Descriptive Catalogue of Sanskrit manuscripts, Adyar library VoL IX पृ 183, 185 & 186 and Descriptive Catalogue of Sanskrit manuscripts (Prajnana Pathasala mandal collections) Part II P 826
2 र. प्र ● ग्रन्थान्ते॥
3. Indian Philosophy ● Vol II P 452 Fn
4 History of Indian Philosophy ● VoL I P 89 & 90 , II P 40, 81 & 103
5 Article "GOVINDANANDA" from 'Preceptors of Advaita' ● p

6. साहित्यरत्नाकरः • प्रस्तावना – पृ. 6
8. Article: 'Problems of identity' by P P Subrahmanya Sastry P A I O C TPT 1940. Pub. Madras 1941
9 र. प्र • पृ. 2 श्लो . 4
10. र. प्र • पृ. 90–91.
11. "यमिह कारुणिकं शरणं गतोप्यरिसहोदर आप महत्पदम्
तमहमाशु हरिं परमाश्रये जनकजाङ्कमनन्तसुखाकृतिम्" (पृ 1)
12. "वन्दे वन्दारुवृन्दस्फुटमुकुटमणिद्योतितांघ्रिं रमेशं
श्रीरामं सद्य एव प्रणतजनगतध्वान्तविच्छेदहेतुम्
सत्यानन्दानुभूतिं निजहृदिविशनान्मायया जीवसंज्ञं
सर्वज्ञं सर्वसंज्ञं निजमहिमदृशां नेतिनेत्यक्षराख्यम्" (पृ.1)
13. र. प्र • पृ. 2 श्लो. 20, वि उ • पृ.1 श्लो. 2
14. वि. उ • पृ. 1
15. पूर्णानन्दीयम् • पृ. 2
16. तत्रैव • पृ.155
17. Descriptive Catalogues of Adyar library • VOL IX. 4282 M-20 P.86,87 & 88
18. पूर्णानन्दीयम् • पृ 138, 139 & 191.
19. "रामानन्दमुनिंनीन्द्रनिरकरैरासेवितं सर्वदा" ब्रह्मविद्याभरणम् पृ.1
"रामानन्दपदाम्भोजं
प्लवं कृत्वा मनोहरम्,
चत्वारोप्यर्णवा एते
समुत्तीर्णाः यथामति – तत्रैव. पृ. 141.
20. भा. दी. पृ. 1. श्लो. 5
21. P.A I O C (TPT) 1940. P 44. Pub.- Madras 1941
22. "यज्ज्ञानाज्जीवतोमुक्ति रुत्क्रान्तिगतिनर्जिता लभ्यते तत्परं ब्रह्म
रामनामाऽस्मि निर्भयम्" ॥ इति॥

23. अद्वैतग्रन्थकोशः ● उपोद्घातः पृ XXXXVIII (48)
24. पञ्चपादिकाविवरणम् ● अवतारिका. पृ. 85.
25. अद्वैतवेदान्तसाहित्येतिहासकोश :- पृ. 280.
26. History of classical Sanskrit literature ● P. 799 - 800
27. Hall ● P 89 M.T 878
28. साहित्यरत्नाकरः- प्रस्तावना
29. साहित्यरत्नाकरः- 1-38.
30. र. प्र ● पृ. 2. श्लो. 4.
31. ब्रह्मविद्याभरणम् ● पृ. 1 श्लो. 4.
32. तत्रैव ● पृ. 141.
33. भा. दी ● पृ.1 श्लो. 4.
34. तत्रैव ● पृ. 1 श्लो. 5
35. अ. वे. सा. को ● पृ. 299.
36. lArt - "Pridhvidhara" by Sri Anantanandendra Saraswathi Swami From - Preceptors of Advaita P 318
37. Sankaradigvijaya ● Introduction PP 24,25
38. Advaita grantha Kosa ● Introduction. P XXXX IX
39. र प्र ● पृ. 2. श्लो. 4
40. HIP VOLUME - II ● P 81
41. Ibid ● P. 103
42. Ibid ● P. 104.
43. अ. वे. सा. को ● पृ. 71 -72.
44. Bibliography of Indian Philosophies ● P. 349
45. अ. वे. सा. को ● पृ. 282.
46. HIP. ● VOL II P. 103
47. र. प्र ● पृ. 91.

48. Siddhantalesa Sangraha of Appayyadikshita ● VOL II Roman and Sanskrit Text (Author Indix) University of Madras. 1933
49. R. 2471. M.G O M.L.
50. पूर्णानन्दीयम् ● पृ. 131.
51. H.I P. ● Vol II P. 80
52. ब्रह्मामृतवर्षिणी ● पृ. 402.
53. र. प्र ● पृ. 118.
54. तत्रैव ● दहराधिकरणम् . सू . 14.
55. पूर्णानन्दीयम् ● पृ. 2 श्लो . 8.
56. तत्रैव ● पृ. 95, 97, 99, 130, 138, 191.
57. अ . वे. सा. को ● पृ . 363.
58. Descriptive Catalogues of Sanskrit manuscripts Ayar VoL IX P. 807
59. पूर्णानन्दीयम् ● पृ. 41.
60. अ . वे. सा. को ● पृ. 363.
61. Bibliography of Indian Philosophies by karl H.Potter P 425
62. M.G.O.M.L ● R.No. 2782.
63. 26 M.20 A L.
64. अ. वे. सा. को ● पृ. 300.
65. शास्त्रसिद्धान्तलेशसंग्रहव्याख्या – कृष्णालंकारा ● श्लो. 6.
66. भा. दी ● पृ . 1 श्लो. 5 ● कृष्णालंकारा – पृ . 1 श्लो. 8.
67. अ. वे. सा. को ● पृ. 299.
68. N.C.C ● VOL I. P 79
69. 1278 ग्र 22 प. (G O M L Mysore)
70 39 E. 9 AL
71 Bibliography of Indian Philosophies ● P 338 - 39

# अध्यासः

1. पूर्णानन्दीयम् – पृ. 14. अयञ्च श्लोकः भाष्यार्थरत्नमालायामपि दृश्यते श्लो. 5.
2. स्थूणा गृहस्तम्भभेदः ॥ स्थूणा यथाऽसकृत् सञ्चाल्य निखनने क्रियमाणे दृढा भवति तथोत्तरग्रन्थेन प्रागुपपादनार्थदार्ढ्यं भवतीत्यर्थः ॥ न्यायोक्तिकोश : पृ – 98.
3. र . प्र. पृ. 22.
4. र . प्र. पृ. 49.
5. र . प्र. पृ . 40.
6 ब्र . सू. शां. भा . पृ. 45.
7. र. प्र . पृ. 41
8. र. प्र . पृ. 81.
9. देवदत्तः स्वयं गच्छेत्
   त्वं वीक्षस्व स्वयन्तथा
   अहं स्वय न शक्नोमी
   त्येवं लोके प्रयुज्यते – पं . द ● 6 – 39.
10. पूर्णानन्दीयम् – पृ. 42.
11. र . प्र . पृ . 39.
12. ब्र . सू . शां. भा – पृ . 47 –48.
13. शा . सि. ले. सं – पृ. 182.
14. र. प्र. पृ. 45.
15. र. प्र – पृ. 46.
16. तत्रैव – पृ. 47.
17. र. प्र. पृ. 47.
18. र . प्र. पृ. 45.
19 र. प्र – पृ 51.

20. पा. यो. सू ● साधनपाद :– सू ● 51.
21. र. प्र. पृ ● 52.
22. ब्र. सू. शां. भा ● पृ. 144.
23. पूर्णानन्दीयम् ● पृ. 58.
24. ब्र. सू. शां. भा ● पृ. 58 – 60.
25. " कामः सङ्कल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" (बृ. उ ● 1. 5. 3) ।। अत्र धीशब्देन वृत्तिरूपज्ञानाभिधानात् कामादेरपि मनोधर्मत्वम्।।
26. र. प्र ● पृ – 63.

## जिज्ञासाधिकरणम्

1. वे. प. ● पृ. 160.
2. त. वा ● 1–2–4.
3. मी. न्या. प्र ● पृ. 202.
4. र. प्र ● पृ. 9.
5. पूर्णानन्दीयम् ● पृ. 5
6. भा. दी ● पृ. 3.
7. अमरकोशः ● नानार्थवर्गः – श्लो. 248.
8. श्रुत्या – श्रवणेन, शंखवीणादिनादश्रवणवदोङ्काराथशब्दयोः श्रवणं मङ्गलफलकम्।"ॐकारश्चाथशब्दश्च द्वावेतौ ब्रहमण. पुरा ।। कण्ठं भित्वा विनिर्यातौ तस्मान्मांगलिकावुभौ" इति स्मरणात् इति ।। र. प्र ● पृ. 68.
9. वि. चू ● श्लो. 25.
10. तत्रैव ● श्लो. 26.
11. वि. चू ● श्लो. 28.
12. र. प्र ● पृ. 77.
13. पं. द ● 11 –19

14. तत्रैव • 11 – 20
15. पं . द • 1 – 63.
16. पं . द • (श्लो) 1 – 64.
17. अ2 . को •
18. ब्र . सू . शां. भा • पृ. 83, 84.
19. र. प्र • पृ . 83, 84.
20. भामती • पृ . 2
21. पं . द • 1 – 12.
22. ब्र . सू. शां. भा • पृ . 88 –90.
23. र. प्र • पृ . 90 – 91.
24. पूर्णानन्दीयम् • पृ . 90

## जन्माद्यधिकरणम्

1. वे . प • 125.
2. तत्रैव • 126.
3. ब्र . सू . शां भा • पृ . 97.
4. र . प्र • पृ . 96.
5. पूर्णानन्दीयम् • 96.
6. "यथोर्णनाभिः सृज्यते गृहयते च" इत्यादि ॥ (मु . उ • 1 . 1. 7)
7. ब्र . सू . शां. भा • पृ . 96 , 97.
8. ख्या . त .स • पृ . 7.
9. स . द . सं • पृ . 13.
10. र . प्र • पृ . 101.
11. भामती • पृ . 48.
12. र . प्र • पृ.
13. भामती • पृ . 48.
14. र . प्र • पृ . 104.

15. र . प्र ● पृ . 99.
16. र . प्र ● पृ . 134.
17. तत्रैव ● पृ . 86, 87.

## शास्त्रयोनित्वाधिकरणम्

1. भामती ● पृ . 57.
2. भ . गी ● 15. 15.
3. र . प्र ● पृ . 117.

## समन्वयाधिकरणम्

1. रत्नप्रभा – यतिवर श्री भोलेबाबाविरचितेन भाष्यरत्नप्रभा भाषानुवादेन च समलंकृता ● पृ . 133.
2. पञ्चपादिकाविवरणम् ● पृ . 776.
3. जै . सू ● 1 – 2 – 1.
4. तत्रैव ● 1 – 2 – 7.
5. ब्र . सू . शां . भा ● पृ . 130.
6. र . प्र ● पृ . 130.
7. वे . सा ● पृ . 105.
8. वे . सा ● पृ . 105.
9. भामती ● पृ . 6.
10. छा . उ ● 6 . 8. 7 – 16.
11. वे . पं ● 7 – 74.
12. वे . सा ● पृ . 106.
13. तत्रैव ● पृ . 106.
14. र . प्र ● पृ . 133.
15. वे . सा ● पृ . 107.
16. तत्रैव ● पृ . 107.
17. तै . उ ● 2 . 8

18. र. प्र ● पृ. 65
19. उपवर्षाचार्यस्य वृत्तिकार इति व्यवहारः ।। अनेन पूर्वोत्तरमीमांसयोवृत्तिर्विरचिता ।। अयमुपवर्षाचार्यः भगवत्पादेभ्यः शबरस्वामिनोऽपि प्राक्तन इति तयोः ग्रन्थेषु तस्य नाम्नः प्रस्तावनादवगम्यते।।तेन विरचिता ब्रह्मसूत्रवृत्तिः सम्प्रति नोपलभ्यते।।
20. र. प्र ● पृ. 139.
21. " गार्हपत्यादावहवनीयं ज्वलन्तमुद्धरेत्" ( आश्व. श्रौ. सू ● 2.2)
22. अत्रानुश्रूयते इत्यत्र श्रुतेरनुभवानुसारित्वमनुशब्दार्थः इति रत्नप्रभा ● पृ. 146.
23. अग्निहोत्रं तपस्सत्यं वेदानां चानुपालनम्
आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ●

वापीकूपतडागादि देवतायतनानि च
अन्नप्रदानमाराम– पूर्तमित्यभिधीयते ●
शरणागतसन्त्राणं भूतानां चाप्यहिंसनम्
बहिर्वेदि च यद्दानं दत्तमित्यभिधीयते ● र. प्र ● 147.
24. र. प्र ● 149.
25. र. प्र ● पृ. 149.
26. तत्रैव ● पृ. 150.
27. "अन्यत्र धर्मादन्यत्राधर्मा
दन्यत्रास्मात्कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च
यत्तत्पश्यसि तद्वद" (क. उ ● 2. 14)
28. के. उ ● 1. 8.
29. न्या. सू ● 1. 1 2
30. र. प्र ● 156.

31. र . प्र ● पृ . 157.
32. तत्रैव ● पृ . 157.
33. र .प्र अनुवादः यतिवरबोलेबाबाविरचितः ● पृ . 175,
34. र .प्र ● पृ . 161.
35. र . प्र ● " स्थितस्यावस्थान्तरं विकारः " : पृ . 162.
36. पञ्चपादिकाविवरणम् ● पृ . 781.
37. ब्र . सू . शां. भा ● पृ . 172.
38. र . प्र ● पृ . 172.

## उपयुक्तग्रन्थसूची

1. अद्वैतग्रन्थकोशः • Prepared by a desciple of Sri Itasiddhindra Saraswathi Swami of the Upanishadbrahmendra Mutt, Kanchipuram. Published by Devavani parishad, I Desapriya Road, Calcutta

2. अद्वैतवेदान्तसाहित्योतिहासकोशः • – प्रबन्धकः र. तङ्गस्वामिशर्मा मद्रपुरी विश्वविद्यालायसंस्कृतग्रन्थमाला – 36.

3. अद्वैतसिद्धिः • तच्च अनन्तकृष्णाशास्त्रिणा टिप्पण्यादिभिः उपकृता, परिमल पब्लिकेशन्स, दिल्ली – अहम्मदाबाद् ।।

4. आपस्तम्बधर्मसूत्रम् • श्रीमद्करदत्त मिश्रविरचितया उज्ज्वलाख्यया वृत्त्या संवलितम् । हिन्दीव्याख्याकारः डाँ उमेशचन्दपर पाण्डेयः काशी संस्कृत ग्रन्थमाला – 93.

5. ईशादिदशोपनिषदः • शांकरभाष्यसमेताः – मोतीलाल बनारसी दास् – 1964.

6. ऋगर्थदीपिका • सम्पादकः लक्ष्मण स्वरूपः मोतीलाल बनारसी दासः – 1940

7. ऋषिकल्पन्यासः • सम्पादकः देवदत्तशास्त्री भारती परिषद्, प्रयाग।।

8. ख्यातितत्वसमीक्षा • वे. सुब्रगम्यशास्त्रिभिः विरचिता तिकुच्चि अद्वैतसभाग्रन्थावलिः – 1982.

9. गौतमप्रणीतधर्मसूत्राणि • हरदत्तकृताक्षरावृत्ति सहितानि, आनन्दाश्रमसंस्कृतग्रन्थावलि : • ख्रिस्तब्दाः 1931

10. तन्त्रार्थप्रसूनमालिका • सम्पादकः श्री. वे. सुब्रहमण्यशास्त्री, काञ्चीपुरीयशङ्करभक्तजनसभया प्रकाशिता, 1982.

11. न्यायरक्षामणिः • श्रीमदद्वैतेन्द ग्रन्थावलिप्रकाशनसमितिः सिकिन्द्रबाद्।।

12. न्यायोक्तिकोशः • छविनाथमिश्रः।। अजन्ता पब्लिकेशन्स (इन्डिया) 1978.

13. पञ्चदशी ● श्रीमद्भारतीतीर्थ विद्यारण्यमुनीश्वरकृता ॥ कलिकाता राजधान्यां सरस्वतीयन्त्रे मुद्रिता ॥ 1882.

14. पञ्चपादिका ● पञ्चपादिका विवरणम् ● Etd by Sastraratnakara polagam S Rama Sastry and Sri S R Krishna Murthy Sastry Madras Government Oriental Series No - CLV

15. प्रकटार्थविरिणम् ● ब्रहमसूत्रशांकरभाष्यव्याख्यानम् – सम्पादकः – ति . र. चिन्तामणिः, विश्वविद्यालयः, मद्रपुरी 1935.

16. पातञ्जलयोगसूत्राणि ● भोजदेवविरचितराजमार्ताण्डवृत्तिसमेतानि ॥ आनन्दाश्रमग्रन्थावलिः॥ ग्रन्थाङ्कः 47. ख्रिस्तब्दा. 1919.

17. ब्रहमविद्याभरणम् ● श्रीमदद्वैतानन्दयतिसार्वभौमैर्विरचितम् ॥ हरिहरशास्त्रिणा संशोधितम्, कोनेरि राजपरिग्रामवास्तव्येन वि. साम्बशिवार्येण कुम्बघोणस्य स्वकीय श्रीविद्यामुद्राक्षरशालायां मुद्रितम् ॥

18. ब्रहमसूत्रशांकरभाष्यम् ● चतुस्सीत्र्यन्तपूर्णानन्दीयव्याख्यासहितया श्रीगोविन्दानन्दप्रणीतया रत्नप्रभयासमन्वितम् ॥ प्रकाशकः – जयकृष्णदास – हरिदासगुप्त–हरिदासगुप्त–चौखाम्बासंस्कृतसीरीज् आफिस् विद्याविलासप्रेस–बनारसी सिटी॥

19. ब्रहमसूत्रशांकरभाष्यम् ● रत्नप्रभा भामतीन्यायनिर्णय व्याख्यानसमुपेतम्॥ आचार्य जगदीशशास्त्रिणा सम्पादितम्– मोतीलाल बनारसी दास्॥

20. ब्रहमसूत्रशांकरभाष्यम् ● भामत्यादिव्याख्योपव्याख्या–नवकोपेतम् Etd by M MVedanta Visarada Ananta Krishna Sastry Pub -by The Metropolitan Printing & Publishing house, limited, Calcutta, 1933

20. भाष्यार्थरत्नमाला ● सुब्रहमण्यविरचिता॥आन्नदाश्रममुद्रणालयः– 1915.

21. भागदीपिका ● रत्नप्रभाव्याख्या ॥ Government oriental Manuscripts library. Madras R No 2782

22. मीमांसान्यायप्रकाशः ● आपदेवविरचितः।। Edited with an original Commentary by Mm Basudeva Sastry Abhyankar Bhandarkar oriental Research Institute, Poona 1972.

23. मीमांसादर्शनम् ● श्री शबरस्वामिविरचित भाष्यसहितम् पं रत्नगोपालभट्टेनसंशोधितम् Vidyavilasa Press, Benaras, 1910

24. वाचस्पत्यम् ● चौखाम्बा संस्कृत सीरीज आफिस–वाराणसी. 1962.

25. A. विवरणोपन्यासः ● श्रीरामानन्दसरस्वतीविरचितः

Eted by Pandit Damodara Sastry Sahasra buddhe Benaras Samskrit Series No: 55, 1900.

25. B विवेकचूडामणिः ● गीता प्रेस।। गोरखपूर।।

26. वेदान्तपरिभाषा अर्थ दीपिका टीकाविभूषलारामशास्त्रिणा सटिण्पणसम्पादिता।। चौखाम्बा संस्कृत सीरीज् आपिस्वााराणसी – 1968.

27. वेदान्तप्रबोधः ● श्रीसत्यबोधाश्रमप्रणीत।। सम्पादकः डॉ. शिवशरणशर्मा।। प्रकाशकः श्री पीताम्बरा–संस्कृत–परिषद् ● दतिया (म.प) 2022 वि.

28. वेदान्तसारः ● सदानन्दयोगीन्द्रविरचितः।। Translated by Swami Nikhilananda, Advaita Ashram, Calcutta

29. वेदान्तसूत्रमुक्तावलिः ● ब्रह्मानन्दसरस्वती विरचिता।। आनन्दाश्रमसंस्कृतग्रन्थावलिः ७७।।आनन्दाश्रमुद्रणालयः– पुण्यपत्तनम्।। क्री.श. 1915.

30. वेदान्तदर्शनम् ● श्री रामानन्दसरस्वतीस्वामिकृतब्रह्मामृतवर्षिणी समाख्यव्याख्यासंकलितम्।।Chaukhamba Sanskrit Series Nos· 155,156, 157&158

31. शङ्करसिद्धान्तः ● श्री श्री ज्ञानानन्देन्द्रसरस्वतीस्वामिनः मुद्रणस्थानम् – धनंजय वरखेडकरः –सुधामुद्रणमन्दिरम्, उत्तरादिमठ कंपौण्ड,

बसवनगुडि, बेङ्गलूरु 560004.

32. शाण्डिल्यभक्तिसूत्रम् ● श्रीमत्स्वप्नेश्वराचार्य विरचितशतसूत्रीय भाष्यसहितम्।। डां श्री कृष्णमणित्रिपाठिना स्वकृत हिन्दीव्याख्यया विशदीकृत्य संशोधितम्।। भारतमनीषासंस्कृतग्रन्थमाला।। वि.सं.2030.

33. शास्त्रसिद्धान्तलेशसंग्रहः● श्रीमदप्पय्यदीक्षितेन्द्रविरचितः।। श्रीमदच्युतकृष्णानन्दविरचितकृष्णालङ्कारव्याख्यया सहितः।। सम्पादकौ ब्रहमश्री एस.आर.कृष्णमीर्तिशास्त्री. डां. एन वीलिनाथन्।। श्रीमदप्पय्यदीक्षितेन्द्र ग्रन्थावलिप्रकाशनसमितिः।। सिकिंदराबाद्।।

34. श्रीमद्भगवद्गीता ● श्री शांकरभाष्यसमेता।। आनन्दाश्रम संस्कृतग्रन्थावलीः।। ग्रन्थाङ्कः –34. खिस्तब्दा. 1981.

35. सर्वदर्सनसंग्रहः ● सायणमाधवाचार्यप्रणीतः।। अभ्यङ्करोपाहव वासुदेवशास्त्रिविरचितया दर्शनाङ्कुराभिधया व्याख्यया सहितः।। निर्णयसागरमुद्रणालयः।।

36. सांख्यदर्शनम् ● विज्ञानभिक्षुविरचितसांख्यप्रवचनभाष्यसहितम्।। विद्याविलास् प्रेस् – 1909।।

37. सिद्धान्तबिन्दुः ● मधुसूदनसरस्वती प्रणीतः।। बन्दुप्रपाताभिधया व्याख्यया समेतः।। Bhandarkar oriental Research Institute, Poona 1962

38. श्री शंकरात्प्रागद्वैतवादः ● श्री मुरलीधरपाण्डेयः।। Banarasidas Sanskrit Book Sellers Chaukhamba, Varanasi

39. साहित्यरत्नाकरः ● धर्मसूरिविरचितः।। With Nauka of Charla Venkata Suri and Mandara of Malladi Lakshmana Suri Edited by K Rajanna Sastry M.O L Sanskrit Academy Osmania University, Hyderabad - 7 A D 1972

हिन्दीग्रन्था.

40. ब्रहमसूत्रम्● यतिवरश्रीबोलेबाबाविरचितेनभाष्यरत्नप्रभा भाषानुवादेन च समलंकृतम्।। अचेयुतग्रन्थमालाकार्यालयः।। काशी।।

41. ब्रहमसूत्रशांकरभाष्यम् • सानुवादभाष्यकौमुदीव्याख्योपेतम् (चतुस्सूत्री) डॉं. कामेश्वरनाथमिश्रीः।। चौखाम्बा संस्कृतसीरीज आफिस्, वाराणसी – 1976.

42. A History of Indian Philosophy
Surendranath Das gupta, Vols 1234&5 Motilal Banarsidass, 1975

43 Bibliography of Indian Philosophies Compiled by Karl H.Potter, University of Minnesota, Motilal Banarsi Das, 1974

44 Chitsukhas Contribution to Advaita V A Sarma M A Ph D Mysore, Kavyalaya Publications

45. Contribution of Andhra to Sanskrit Literature Dr P Srirama Murthy, Published by Andhra University Press, Waltair.

46 Descriptive Catalogues of Sanskrit manuscripts In the Adyar Library, Vol IX, The Adyar Library 1952

47 Describe Catalogues of Sanskrit manuscripts
Prajna pathasala Mandala Collection, Edited by Lakshmana Sastry Jyoshi, Prajna Pathasala Mandal WAI

48 Govindananda (Article) by T R Subramanyam, From The Preceptors of Advaita, Editor T.M.P Mahadevan, Published by Sri Kanchi Kamakoti Sankara Mandir, Secunderabad (1968)

49 Govinda and Ramananda, problems of identity (Art)· by P P Subramanya Sastry, P A I O C

50 Indian Philosophy by Radha Krishna Vol I & II Blackee & Sons Publishers Pvt Ltd

51 Jivanmukti in Advaita byVidyalankara, Prof S K RamaChandra Rao, Published by I B H Prakasana, gandhinagar, Bangalore

52 New Catalogus Catalogorum, Vol I, Revised Edition by Dr V Ragavan, University of Madras

53 Out lines of Indian Philosophy by M Hiriyanna, published by D.R Bhagi for george Allen and (India) Private Limited, 103/5, Fort Street, Bombay -I 1976

54 Preceptors of Advaita, published by Sri Kanchi Kamakoti Sankara Mandir, Secunderabad, 1968

55. Problems of Post-Sankara Advaita-Vedanta by Jadunath Sinha, M.A Ph D, Sinha publishing House Pvt Ltd 39, S R Das Road, Calcutta-26, India 1971

56 Sankara digvijaya (The traditional Life of Sri Śankaracharya by Madhava Vidyaranya , Translated by Swami Tapasyananda, Sri Ramakrishna Math, Madras-4

57 The philosophy of Advaita With special reference to Bharatithirtha Vidyaranya, by T M P Mahadevan, Ganesh & Co Pvt, Ltd Madras-1957

58 The Sıddhantalesa Sangraha of Appayya Dıkshıta, Vol II, Roman And Sanskrit Texts edıted by S S Suryanarayana Sastry, Unıversıty of Madras - 1937

Telugu - Works

59 Kalyana Sudha (Sankara Brahma Sutra Bhasyavyakhya) by Jagadguru Sri Kalyananda Bharti Mantacharya, Lakshmı Mudrakshara Sala, Tenalı

60 Vedanta Sarvasvama by Brahmasrı Mudıgonda Venkata Rama Sastry, Avan printing works, Esamıa Bazar, Hyderabad - 27.

61 Samskruta Vangmaya Charitra Vol II by Brahmasrı Malladı Suryanarayana Sastry, Saraswatı Pavanı Press, Rajahmahendra Varam, 1936